महाकविवत्सराजविरचितः

# त्रिपुरदाहः

श्रीवेङ्कयार्यविरचितः

# महेन्द्रविजयः

श्रीवेङ्कटवरदाचार्यविरचितः

# श्रीकृष्णविजयः



कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृताः

सम्पादकौ

डॉ. दशरथद्विवेदी

डॉ. राजनारायण-उपाध्यायश्च

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी

SARASVATĪBHAVANA-GRANTHA MĀLA
[ Vol. 137 ]

# TRIPURADĀHA

BY ŚRĪ VATSARĀJA

# MAHENDRAVIJAYA

BY ŚRĪ VEṄKAYĀRYA

# ŚRĪKṚṢṆAVIJAYA

BY ŚRĪ VEṄKAṬAVARADĀCĀRYA

FOREWORD BY
**DR. MANDAN MISHRA**
VICE-CHANCELLOR

*EDITED BY*
**DR. DAŚARATHA DVIVEDĪ**
**AND**
**DR. RĀJANĀRĀYAṆA UPĀDHYĀYA**



VARANASI

1999

Research Publication Supervisor—
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.



Published by—
Dr. Harish Chandra Mani Tripathi
Director, Publication Department
Sampurnanand Sanskrit University
Varanasi-221 002.



Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi-221 002



First Edition—500 Copies
Price – Rs. 80-00



Printed by—
Shri Balram Upadhyay,
Manager,
Sampurnanand Sanskrit University Press
Varanasi-221 002

सरस्वतीभवन-ग्रन्थमाला

[ १३७ ]

महाकविवत्सराजविरचितः

# त्रिपुरदाहः

श्रीवेङ्कयार्यविरचितो

# महेन्द्रविजयः

श्रीवेङ्कटवरदाचार्यविरचितः

# श्रीकृष्णविजयः

कुलपतेः डॉ० मण्डनमिश्रस्य प्रस्तावनया समलङ्कृताः

सम्पादकौ

डॉ० दशरथद्विवेदी

डॉ० राजनारायण-उपाध्यायश्च




वाराणस्याम्

२०५६ तमे वैक्रमाब्दे १९२१ तमे शकाब्दे १९९९ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।



प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
निदेशकः, प्रकाशनविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी–२२१ ००२.



प्राप्तिस्थानम् —
विक्रय-विभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.



प्रथमं संस्करणम्, ५०० प्रतिरूपाणि
मूल्यम्–८०·०० रूप्यकाणि



मुद्रकः —
श्रीबलराम उपाध्यायः
व्यवस्थापकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य
वाराणसी–२२१ ००२.

# प्रस्तावना

आङ्गिकं भुवनं यस्य वाचिकं सर्ववाङ्मयम्।
आहार्यं चन्द्रतारादि तं नुमः सात्त्विकं शिवम्॥

विश्वेऽस्मिन् सर्वो लोकः सुखं कामयत इति नातिशयितं वचः। सुखावाप्तये दुःखनिवृत्तये च सर्वे प्राणिनः प्रयतमाना दृश्यन्ते। शास्त्रानुसारं दुःखमाध्यात्मिकाधिभौतिकाधिदैविकभेदेन त्रिविधम्। दुःखनिवृत्तेरुपाया अपि त्रिविधाः—दृष्टः, अदृष्टः, शास्त्रीयश्च। एतैरुपायैरैकान्तिकात्यन्तिक-दुःखध्वंसं नावलोकयन्तो विद्वांस उपायान्तराण्यकल्पयन्। एतेषु आचार्येषु नाट्यशास्त्रप्रणेता भरतमुनिः संसारस्य दुःखनिवृत्तये नाट्यवेदमरचयत्। नाट्यशास्त्रमधिकृत्य स्वयमेव वृणुते—

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते॥

(ना० शा० १।११६)

नाट्यशास्त्रस्य प्रायोगिकपक्षोऽभिनयः। आङ्गिकवाचिकाहार्य-सात्त्विकाख्याभिनयै रामयुधिष्ठिरादीनामवस्थानुकरणं भवति। अभिनय-प्रकारो विभिन्नेषु रूपकेषु संदृश्यते। इदं रूपकं दशविधम्—

नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश॥

(सा० द० ६।३)

एवंविधेषु दशरूपकप्रकारेषु डिमाख्यप्रकारविशेषः काचिद् अपूर्वतां बिभर्ति। डिमस्यास्य लक्षणं सुष्ठु प्रतिपादितमस्ति साहित्यदर्पणे—

मायेन्द्रजालसङ्ग्रामक्रोधभ्रान्तादिचेष्टितैः।
उपरागैश्च भूयिष्ठो डिमः ख्यातेतिवृत्तकः॥
अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः।
चत्वारोऽङ्का मता नेह विष्कम्भप्रवेशकौ॥
नायका देवगन्धर्वयक्षरक्षोमहोरगाः।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धृताः॥
वृत्तयः कौशिकीहीना निर्विमर्शाश्च सन्धयः।
दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गारवर्जिताः॥

(सा० द० ६।२४३)

संस्कृतवाङ्मयं निःसंशयं सर्वेभ्यो वाङ्मयेभ्यः पुरातनतमं चकास्ति। जनजीवनकल्याणदृग्भिर्भारतीयमनीषिभिः प्रतिक्षेत्रं यानि यानि ग्रन्थरत्नानि

विरचितानि तेषु सहृदयहृदयाह्लादकारीणि रूपकाणि भवन्ति। तस्मात् सत्यमिदमुक्तं यत् 'नाटकान्तं कवित्वम्'। एतादृशनाट्यप्रयोगेषु डिमस्य प्रयोगः प्राचीनो भाति। भरतमुनिनापि त्रिपुरदाहनामको डिमः स्वनाट्यशास्त्रे समुल्लेखितः। मन्ये, वत्सराजविरचितस्त्रिपुरदाहस्तादृशीं कामपि परम्परां निजीकरोति।

पुराणेषु प्रख्यातवस्तुषु भगवतो भूतभावनशिवस्य त्रिपुरासुरदाहविषयमवलम्ब्य बह्व्यः कथाः श्रूयन्ते। ताः कथा आश्रित्य कविराजेन वत्सराजेनानल्पप्रतिभया कल्पितोऽयं डिमग्रन्थः। वत्सराजप्रणीतेषु षड्रूपकेषु प्रसिद्धेषु प्रसिद्धतमोऽयं त्रिपुरदाहो डिमलक्षणैरुपेतं शीर्षस्थं स्थानमलङ्करोति।

त्रिपुरदाहस्य रचयितुर्वत्सराजस्य समयो द्वादशशतकमिति बाह्याभ्यन्तरप्रमाणैर्निश्चप्रचं वक्तुं शक्यते। असौ तत्कालीनकलिञ्जरशासकस्य राजसदसि अमात्य आसीदिति सुस्पष्टं विद्यते। विद्युन्मालि-लोहिताक्ष-तारकाक्षैस्तारकासुरतनुर्भवैर्देवानां पीडनम्, देवैर्भगवच्छिवस्य स्तुतिः, ततः परं भगवता परेशेन त्रिपुरदहनं च डिमस्यास्य सङ्क्षिप्तं कथावस्तु। अस्य सुज्ञातस्य कथावस्तुनो नाटकीयं प्रतिपादनमेव कवेरपूर्वता। अत्र पात्रसन्निवेशोऽनुमतनियमपरिधौ विषयस्य पल्लवनं संवर्द्धनं चास्य महत्त्वाधायकं तत्त्वम्। एवं प्रकारेण श्रीवेङ्कयार्यविरचितश्चतुरङ्कोपेतो 'महेन्द्रविजय'नामको डिमः, श्रीवेङ्कटवरदाचार्यविरचितः 'श्रीकृष्णविजय'-डिमश्च समानरूपेणापूर्वतां बिभर्त्तः।

दक्षिणभारतस्य विभिन्नप्रान्तेभ्यः पाण्डुलिपीः सङ्गृह्य डॉ० दशरथ-द्विवेद-डॉ० राजनारायण-उपाध्यायमहोदयौ एतेषां महत्त्वपूर्णग्रन्थानां सम्पादनं कृतवन्ताविति तौ धन्यवादार्हौ। ग्रन्थरत्नमिदं नूनं सामाजिकानां विपश्चिदपश्चिमानां प्रीणनाय जिज्ञासूनां च जिज्ञासामोचनाय महते उपकाराय स्यादिति विश्वसिमि।

प्रसङ्गेऽस्मिन् ग्रन्थस्यास्य सुष्ठु प्रकाशनार्थं विश्वविद्यालयस्यास्यैश्वर्यशालिने प्रकाशन-निदेशकाय डॉ० हरिश्चन्द्रमणि-त्रिपाठिमहोदयाय, ईक्ष्यशोधकाय डॉ० हरिवंशकुमारपाण्डेयाय, प्रकाशनविभागीयसहयोगिभ्यः, विश्वविद्यालयीयमुद्रणालयव्यवस्थापकाय च शुभाशंसनं समुपाहरन् ग्रन्थमिमं साहित्यशास्त्रमनीषिप्रवरेभ्यः समुपहरामि।

वाराणस्याम्
श्रीरामनवम्याम्,
वि० सं० २०५६

मण्डनमिश्रः
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# भूमिका

यस्योन्मेषे निमीलत्यखिलमपि जगद्यन्निमेषेऽखिलाना-

मुन्मेषो विरूपानामुपनमति यदग्नेरनङ्गः पतङ्गः ।

आसुर्यश्चापि पुर्यस्त्रिभुवनकुशलायाहुतिर्यत्र भूता

रौद्रं तद्रुद्रनेत्रं रचयतु निखिलज्योतिभद्रोदयं नः ॥

आनन्दनिस्यन्दिषु रूपकेषु डिमानामल्पीयस्येव संख्याऽस्ति । सर्वप्रथमं मम निर्देशने डॉ॰राजनारायण-उपाध्यायो डिमानधिकृत्य 'पी-एच्॰डी॰' उपाधिप्राप्तये शोधप्रबन्धमलिखत् । प्रकाशितडिमानामनुपलब्ध्या कार्यं एष दुष्कर एवासीत् । महता प्रयासेन स दक्षिणभारताड्डिमानां पाण्डुलिपीरधिगतवान् । मद्रासराजकीयहस्तलिखितग्रन्थागारात् सः श्रीकृष्णविजयं वीरभद्रविजयं चेति डिमयोः पाण्डुलिपी प्राप्तवान् । सौभाग्याद् राजकीयानुसन्धानकेन्द्रमैसूरतः 'महेन्द्र-विजयम्' इति डिमस्यापि हस्तलिखितप्रतिलिपिरुपलब्धा । त्रिपुरदाहस्य प्रकाशितपुस्तकं बरौदातः प्रकाशितेषु 'रूपकषट्केषु' आसीदेव । इत्थं डिमचतुष्टयमधिकृत्य सः स्वकीयं शोधप्रबन्धमलिखत् ।

संस्कृतरूपकसाहित्ये त्रिपुरदाहमित्येकमेव प्रकाशितचरं पुस्तकमिति विचार्यान्येषां प्रकाशनाय उद्युक्तोऽहं सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य पूर्वकुलपतिं मम गुरुं विद्वद्वरेण्यं प्रथितयशसं पं॰ श्रीविद्यानिवासमिश्रमनिवेदयम् । स च सहर्षं प्रस्तावं मदीयं स्वीकृत्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनाधिकारिणं श्रीमन्तं हरिश्चन्द्रमणित्रिपाठिनं प्रकाशनार्थमादिशदिति तेषामनुकम्पयैव डिमरूपकसङ्ग्रहं विदुषां समक्षमस्तीति सन्तोषमनुभवामः ।

प्रकृतडिमानामेकलपाण्डुलिप्यैव प्रकाशनं क्रियते । डिमानामुपलब्धाः पाण्डुलिपयो भ्रष्टाः, खण्डिताः, अपूर्णाश्चासन् । महतायासेन संशोध्य ताः प्रकाशनार्थं यथासमयं यथास्थानं यथायोग्याधिकारिणं सम्प्रेषिताः । कालातीतमपि कार्यसिद्धिरन्तस्तोषमुपजनयतीति डिमानामत्र सङ्ग्रहरूपेण प्रकाशनं मन्ये संस्कृतविदुषां मनसि मोदमातनिष्यते ।

नाटकान्तं कवित्वमिति रूपकप्रथनमेव कविकौशलनिकषमिति दशरूपकेषु रौद्रप्रधानडिमरूपकलेखनपटवः कवयो नितरां प्रशंसार्हाः । डिमेषु

वस्तुनायकौ प्रख्यातोदात्ते भवतः। भरतोक्त्या नायकोऽत्र धीरोदात्तो भवति, प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकाश्चैवेति तदुक्तेः। प्रायशोऽस्य पालनं न दृश्यते डिमेषु। शृङ्गारहास्यविवर्जिताः षड्रसा भवन्ति। रौद्र एवात्र दीप्तरसो भवति। चत्वारोऽङ्कास्तेषु च नानाभावानामभियोजनं रचनासु वैचित्र्यमातनोति। निर्घातोल्कापाताहवसूर्यचन्द्रोपरागेन्द्रजालमायादीनामत्र प्रचुरप्रयोगो भवति। षोडशोद्धता यक्षराक्षसभुजङ्गाद्याश्चात्र नायकाः परस्परमाघातप्रतिघाताभ्यां रूपकसौभाग्यवर्द्धनं कुर्वन्ति। सात्वत्यारभटीवृत्त्योरत्र प्राधान्यं दृश्यते। प्रवेशकविष्कम्भकाभ्यां शून्या भवन्ति डिमाः। धनञ्जयस्तु भरतमतमनादृत्य धीरोद्धतनायकस्यात्रावश्यकतां प्रस्तौति न तु धीरोदात्तस्य। डिमेषु वीररौद्रयोरवस्थितिर्भवति। यद्यपि सति वीरे धीरोदात्तनायकताऽपि स्वीकार्येति विद्वद्भिः पर्यालोच्यम्। डिमलक्षणार्थं नाटचशास्त्रस्य ( १८.८४–८८ ), दशरूपकस्य ( ३.५७–६० ) तथा विश्वनाथविद्यानाथप्रभृतीनां साहित्यशास्त्रग्रन्थावलोकनं कर्तव्यम्।

महेन्द्रविजयस्य प्रस्तावनायामेव ( ११४ ) डिमलक्षणं लिखितं कविना यच्च शास्त्रमेवानुकरोति। एवमेव वीरभद्रविजये ( ११३ ) तथा च श्रीकृष्णविजयेऽपि डिमलक्षणं ( ११२८ ) निबद्धमस्ति।

त्रिपुरदाहस्य डिमस्य कविर्वत्सराजस्तत्कालीनस्य कालिञ्जरस्य शासकस्य परमार्दिदेवस्य ( ११६५–१२०३ ई० ) राजमन्त्री आसीत्। सुस्पष्टं यत्तस्य जीवनसमयो द्वादशशतक आसीत्। वत्सराजस्य षड्रूपकाणि प्रसिद्धानि सन्ति—किरातार्जुनीयव्यायोगः, कर्पूरचरितभाणः, रुक्मिणीहरणमिति ईहामृगः, त्रिपुरदाहमिति डिमः, हास्यचूडामणिः प्रहसनम्, समुद्रमन्थनमिति समवकारश्चेति।

महेन्द्रविजयस्य कविः श्रीप्रधानवेङ्कयार्योऽष्टादशशतके मैसूरराज्ये जन्मना धरामलञ्चकार। स च कृष्णराजद्वितीयस्य ( १७३४–१७६६ ई० ) मन्त्री बभूव। १७८० ई०वर्षे वेङ्कयार्यः श्रीनञ्जराजचामराजयोर्मन्त्री आसीत्। नञ्जराजस्तं 'प्रधानम्' इति उपाधिं प्रदत्तवान्। हैदरअलीशासने श्रीवेङ्कयार्यः स्वपदादवनतिं प्राप्य सुदूरं गत्वा राजनियोगमकरोदिति सः अष्टादशशतकीय आसीदिति सुनिश्चितम्।

श्रीवेङ्कयार्यो मैसूरराज्ये भार्गववंशीयस्य श्रीहम्पय्यस्य पुत्र आसीत्। स च जन्मना 'बावाम्बिके'ति नाम्न्या मातुः कुक्षिमलङ्करोत्। गुरोरस्य नामासीत् श्रीचिदानन्दः। श्रीवेङ्कयार्यस्य जन्मस्थली श्रीरामपुरीं आसीत्। पिता चास्य श्रीरामपुर्याः शासकस्य अमात्यपदमलङ्करोति स्म।

श्रीवेङ्कयार्यो ब्रह्मविद्याविदभूत् । षड्दर्शनीवल्लभः किं वा षड्दर्शनीनेतेति पदाभ्यां स विभूषित आसीत् । महेन्द्रविजये तथा कामविलासे स रामस्यानन्यो भक्त इति स्तुतः । महेन्द्रविजये स रामस्तुतिं विदधाति । सः सर्वभाषाकलाविदासीदित्यपि तद्ग्रन्थदर्शनादवगम्यते । तस्य रचनानां पाण्डुलिपयो मैसूरराज्यग्रन्थागारे सुरक्षिताः सन्ति । ताश्च सन्ति—कामविलासभाणः, कुक्षिम्भरभैरवं प्रहसनम्, महेन्द्रविजयमिति डिमः, वीरराघवं व्यायोगः, विबुधानन्दं समवकारः, सीताकल्याणमिति वीथी, रुक्मिणीमाधवमित्यङ्कः, उर्वशीसार्वभौममिति ईहामृग इति। एवमन्या अपि रचनाः सन्ति । ताश्च यथा—अलङ्कारमणिदर्पणम्, जगन्नाथविजयम्, सुधाझरीत्युपन्यासः, कुवलयविजयं चम्पूः, आञ्जनेयशतकम्, सूर्यशतकम्, हनुमज्जयस्तथा चिद्देवशतकमिति। कन्नडरचनासु कर्णाटरामायणम्, इन्दिराभ्युदयम्, हनुमद्विलासमिति च सन्ति ।

महेन्द्रविजयमिति डिमश्चतुरङ्कोपेतमस्ति । तस्य चाभिनयमभूत्प्रथमं श्रीरामपुर्यां भगवतः श्रीवेङ्कटनाथस्य महोत्सवे समागतरसिकानामानन्दप्रमोदवृद्धिहेतवे ।

श्रीकृष्णविजयस्य कविः श्रीवेङ्कटवरदाचार्यो मद्रासराज्यस्य आर्काटजनपदस्य श्रीमुष्णपुरग्रामवास्तव्यस्य पौण्डिन्यगोत्रीयस्य रामानुजवैष्णववंशस्य श्रीउप्पलाचार्यस्यात्मज आसीत् । तस्य पितामहः श्रीवरदार्यः, प्रपितामहश्च श्रीनिवासार्योऽभूत्। श्रीउप्पलाचार्यस्यापरे त्रयो भ्रातर आसन्। श्रीवेङ्कटवरदाचार्यस्यापि एकोऽपरो भ्राता आसीत् । सर्वेऽस्य वंशे परम्परया विद्वांसः समभूवन् ।

श्रीनिवासवरदार्ययोः प्रपितामहपितामहयोरस्य रचनानां संख्या पञ्चाशदधिका आसीदिति श्रीकृष्णविजयप्रस्तावनातोऽवगम्यते । श्रीवेङ्कटवरदाचार्यस्य रचनानामुल्लेखस्तत्र मिलति—श्रीनिवासचरितम्, श्रीनिवासकुशलाब्धिचन्द्रिका, श्रीकृष्णविजयम्, श्रीनिवासार्णवम्, श्रीदिव्यदम्पतिवरस्तवम्, अत्रिकामकलावल्लीति। श्रीकृष्णविजयस्याभिनयमभूदित्युल्लेखोऽपि ग्रन्थ एवोपलभ्यते ।

त्रयाणां डिमानां कथा पुराणेषु महाभारते च मिलति । त्रिपुरैर्देवानां पीडनम्, देवैर्महेशस्तुतिः, शिवद्वारा त्रिपुराणां विनाश एव त्रिपुरदाहस्य कथा । नाट्यशास्त्रसिद्धान्तमनादृत्यास्मिन् श्रीकृष्णविजये डिमे शृङ्गारस्य प्रचुरप्रयोगोऽभूदत्र तु श्रीकृष्णानुमत्या तस्य च कौशलेन सुभद्रार्जुनयोः समागमो दृश्यते । न केवलमत्र रसविषय एव प्रत्युत सन्धि-विष्कम्भक-प्रवेशकाङ्कादिविषये

चापि शास्त्रविरुद्धं वर्णनं कविः करोति। शृङ्गारस्यामर्यादितमपि रूपमत्र मिलति। येषां मञ्चे प्रदर्शनं निषिद्धमस्ति तेषामपि प्रदर्शनमत्र बहुधा दृश्यते। श्रीकृष्णमाचार्य एनं नाटकं वदति न डिममिति समुद्रमन्थनाज्जातामृतोपलब्धये देवासुराणां सङ्घर्षस्य निबन्धनं महेन्द्रविजये कृतं कविना। महेन्द्रोऽत्रोद्धतो नायकः। श्रीमतोराङ्गिरसभार्गवयोर्भूमिकाऽत्र महती प्रशंसार्हाऽस्ति। डिमस्यास्याप्यभिनयमभूदिति डिमस्य प्रस्तावनातो ज्ञायते।

तदेवं डिमत्रयाणामप्रकाशितचराणामत्र प्रकाशनं मन्ये संस्कृतजगति मुदमातनिष्यतीति विदुषां पुरस्सरमस्ति। महतायासेनाऽपि पाण्डुलिपीनामेकलानाञ्चोपलब्ध्या त्रुटीनां भग्नांशानाम् अस्पष्टपदानां च सम्यक् समाधानं न सञ्जातमिति सम्पादकौ सुतरामनुभूयेते, तदर्थं विद्वांसः क्षमिष्यन्ति, केवलं नूतनावतारमेवाकलय्य परिभावयिष्यन्तीति निवेद्यन्ते।

पुनरपि डिमानां प्रकाशनार्थं प्रकाशनोपकरणभूतेभ्यः सर्वेभ्यो विद्वद्भ्यो भूरि-भूरि साधुवादान् दद्वः। यतश्च येषाञ्च साहाय्येन पाण्डुलिपीरधिगतास्ते मद्रासमैसूरराज्यग्रन्थागाराधिकारिणोऽपि धन्यवादार्हाः, येषां साहाय्येन विना कार्यमेवासम्भवमासीत्।

पूर्वमेवोक्तचरा गुरवः पण्डितश्रीविद्यानिवासमिश्राः पूर्वकुलपतयः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य तथा डॉ० हरिश्चन्द्रमणित्रिपाठिनः प्रकाशन-निदेशकाः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्यान्ये च प्रकाशनपराः सहायका भूरिशो धन्यवादार्हाः, येषां कृपैव डिमानामुद्धरणे हेतुरिति शं भूयादिति।

रसान् भृङ्ग इवादत्ते गुणानेवाहितः सुधीः।

वसन्तपञ्चमी, वि० सं० २०५५

सम्पादकौ
दशरथद्विवेदी
राजनारायण-उपाध्यायः

महाकविवत्सराजविरचितः

# त्रिपुरदाहः



परिकरितमिन्दुमौलेर्जयति शिरः स्वर्गवाहिनीसलिलैः ।
यस्मिन्नुप्तं सद्यः कुसुमं कल्पद्रुमीभवति ॥ १ ॥

पिङ्गैः कुर्वन्कुजमयमिव व्योमतुङ्गैः स्फुलिङ्गै-
बिभ्रद्धूमान्सुरपतिभियोड्डीयमानानिवाद्रीन् ।
मन्दाकिन्याः क्वथनमुखरं नर्त्तयन्वारिपूरं
बाणस्याग्निः स जयति पुरप्लोषकारः पुरारेः ॥ २ ॥

धूमैर्व्यामिलयन् मुखानि नयनान्याप्लावयन्नश्रुभिः
सन्तापार्तिपराभवं पृथुशिखाचक्रेण विस्तारयन् ।
हर्षोत्कर्षसमागमेऽपि दिविषद्वर्गस्य शोकोचित-
व्यापारस्त्रिपुरं दहन् विजयते भर्गस्य बाणानलः ॥ ३ ॥

( नान्द्यन्ते )

**सूत्रधारः**—( समन्तादवलोक्य )

**पारिपार्श्विकः**—( ··· ···अपरा)ध्यते भवान् ।

**सूत्रधारः**—मार्ष ! किं मामुपहससि । स एव देवोऽत्रापराध्यति ।

तथा हि—

**अनारता(तं) दानपरम्पराभि-**
**र्निर्वेदमायाति कदाचिदुर्वी ।**
**बिभर्ति तत्पूर्वमिव प्रहर्ष**
**मुहुः प्रदानैः परमर्द्दिराजः ॥ ४ ॥**

**पारिपार्श्विकः**—लभतां लभताम् । नाहमीर्ष्याकालुष्यपात्रम् । किन्तु वैभवोचितं यन्न दानमारभते भवान्, तदहमुपतप्ये ।

तथा हि—

पुष्टापि रक्षितापि प्रयत्नतो दानविरहिता लक्ष्मीः ।
गौरिव वन्ध्याभूता भवति परं कष्टदा गृहिणः ।। ५ ।।

**सूत्रधारः**—( सगर्वम् ) मार्ष ! प्रतीक्षस्व सूर्यचन्द्रोपरागादिपर्व । मूर्ख ! पश्यसि मे महादानानि ।

**पारिपार्श्विकः**—भाव ! को विलम्बः शंसत्युपरागाणां त्रिपुरबलगर्विते दैत्यवर्गे । तथा हि—

दैत्यास्ते कैटभीयाः क्रथनमभिलषन्त्यब्धिमध्येऽपि शौरे-
र्वारं वारं हिनस्ति द्युमणिशशिधरौ बाहुहीनः स राहुः ।
रुग्णे गीर्वाणवर्गे त्रिपुरपरिभवैः सोऽपि पातालमूला-
ज्जाने कैरप्यहोभिर्बलिरिह बलवानेष्यति ध्वस्तबन्धः ।। ६ ।।

( नेपथ्ये सोपहासम् )

युज्यते युज्यते तवैतत् । चारणा हि दुरुदाहरणदोहदैर्विरोधविषवल्लीं वर्द्धयन्तो दुर्बलान् बलिष्ठैर्घातयन्ति ।

**पारिपार्श्विकः**—( सभयम् ) भाव ! कोऽयमकारणं कुप्यति ?

**सूत्रधारः**—( स्वरप्रत्यभिज्ञामभिनयन् ) एष विरञ्चिनन्दनो महामुनिर्नारदः ।

**पारिपार्श्विकः**—( सोपहासम् ) अहो ! मुनेरुपशमशीलता ।

**सूत्रधारः**—( विहस्य ) स्वभाव एवायमस्य । किन्न जानाति भवान् ? तथा हि—

न वीणा प्रीणाति श्रुतिपुटसुखग्रामघटना
स्वराभोगः साम्नामपि च न तथा पुष्यति सुखम् ।
मिथःक्रूरक्रोधग्रथितपरुषालापबहलः
कलिः प्रह्लादाय प्रभवति यथा नारदमुनेः ।। ७ ।।

तदयं कलहावलोकनकुतूहली स्वयं च क्रोधनो दूरत एव नमस्यः । एह्यावां निजनियोगमनन्तरकरणीयं सम्पादयावः ।

( इति निष्क्रान्तौ )

( [इति] प्रस्तावना )

[ततः प्रविशति नारदः]

नारदः—( ससंरम्भं समन्तादवलोक्य ) कथं न कोऽप्यत्र ? अहो धाष्टर्यं मिथ्योक्तिवाचाटस्य नटस्य । तथा हि—

त्रिशूललीलायितमन्धकारे-
ध्र्यायत्सु चक्राक्रमणं मुरारेः ।
भयज्वराटोपपचेलिमेषु
दैत्येषु शौर्यस्य लवः कदासीत् ॥ ८ ॥

अथवा नटोऽयं किमुपालभ्यते, यो राहुमपि वीरगणनायां गणयति ।

( नेपथ्ये )

आः ! ब्राह्मणोऽसि । किं करोमि । निरङ्कुशरसनो व्याहर यथा यथा रोचते ।

कनकशिखरिदुर्गं वज्रपाणिर्न मुञ्च-
त्युदधिसलिलदुर्गैर्जीवितो दानवारिः ।
स च पितृवनदुर्गं चन्द्रचूडोऽधिशेते
सुभटभणितिशोभां युज्यते निर्जराणाम् ॥ ९ ॥

नारदः—( स्वरानुसारेण ऊर्ध्वमवलोक्य, स्वगतम् ) कथमयं राहुर्व्याहरति ? भवतु, कोऽयं वराकः ?

( ततः प्रविशति व्योमयानेन राहुः )

राहुः—कनकशिखरीत्यादि पठति ।

नारदः—( सोपहासम् ) अयि राहुवीर ! उपहसनीयैव सुभटभणितिर्देवानाम् । तथा हि—

जम्भस्तम्भितविक्रमः सुरपतिर्मन्दोऽहदूनो रविः
सोऽप्यास्ते गजकृत्तिगुप्तजघनो देवस्त्रिशूलायुधः ।
कृष्णः सोऽपि कदर्थितो मधुमुरप्रायैर्मुहुर्दानवैः
शौर्याशौर्यपरिस्थितिं सहृदयो जानाति राहुर्भवान् ॥१०॥

राहुः—( साशङ्कमिव मूर्द्धकम्पेन वारयति )

नारदः—( सहासम् ) अयि सैंहिकेय ! हस्तसंज्ञया वारय ।

राहुः—( सक्रोधम् )

विहस्तितां नारद मामकीयां
गतत्रपः किं हससि प्रहृष्टः ।
करान् खरांशोर्हसितुं सहस्रं
न तेऽस्ति वक्त्रं मदुपद्रुतस्य ॥११॥

तदाकर्णय मे हितैषिणो वाणीम्—

मन्द नारद ! जल्प मुञ्चसि न किं विप्रोचित चापल
मिथ्याहङ्कृतिजल्पितैस्तव हहा ! कुप्यन्तु मा दानवाः ।
देवेष्वस्तमुपागतेषु सहसा तत्क्रोधलीलायितै-
रेषाऽन्योन्यविरोधिनी क्व नु मुने ! विद्या प्रयोज्या त्वया ॥१२॥

नारदः—( सहासम् ) सैंहिकेय ! अहमप्यत एव न देवानाकोप्य दानवान्निर्मूलमुन्मूलयामि ! तथा हि—

निर्मूलमुन्मूलितदानवेषु देवेषु निर्वैरसुखप्रियेषु ।
सङ्ग्रामसम्मर्द्दभरावलोककुतूहलं स्यात्क्व नु नारदस्य ॥१३॥

राहुः—( सोपहासम् ) अहो महाहवकुतूहलित्वं महामुनेः ! तदहं प्रतिग्रहान्तरनिरीहस्य पूरयामि भवतः समरावलोकनसमीहाम् ।

वराको राकायां मम कवलतामेत्यशरण-
स्तथा दर्शेऽप्यर्कश्रियमुपगतः शीतकिरणः ।
तदद्यैव क्रूरप्रसृमरकरं केवलममुं
करिष्यामि ग्रासं दिनपरिवृढं पश्यतु भवान् ॥१४॥

( इति सक्रोधं निष्क्रान्तः )

नारदः—( साश्चर्यम् ) अहो ! चण्डिमा दानवखण्डस्य । तदहं भगवतीं भागीरथीमुपास्य खण्डपरशुमुपवीणयितुमनुसरामि । तमेव देवं दानवेभ्यः क्रोधयिष्यामि । ( नभोऽवलोक्य ) सुरसमूहोऽपीदानीं शिवं सेवमानो भविष्यति ।

( इति निष्क्रान्तः )

( [अत्र] विष्कम्भकः )

( ततः प्रविशति सुरसमूहोपास्यमानो महेशः )

महेशः—( स्वगतं साशङ्कम् ) आः ! किं पुनर्विध्वंसितानिव पश्याम्यमृतान्धसः ? भवतु पृच्छामि । ( प्रकाशम् ) अयि सुरगुरो ! किमेतत् ?

शाक्रं चक्षुः सहस्रं परिवहति हिमक्लीबराजीवमुद्रां
पाशः प्राचेतसोऽयं पिशुनयति सुखध्वंसमालस्यवश्यः ।
सुप्तोत्साहो हुताशः कलयति सुमनः कालिमानं द्वितीयं
क्रूरां कष्टस्य काष्ठां स्फुटमभिदधति व्याकुला लोकपालाः ॥१५॥

बृहस्पतिः—( सोल्लुण्ठम् ) किं पुनर्भगवान् सर्वज्ञो नारदवदस्मान् कन्दलाय मुखरीकर्त्तुमिच्छति ? स्वयमेव वेत्तु देवः ।

( प्रविश्य सम्भ्रान्त इव )

नारदः—नेत्रे मीलय चन्द्रसूर्यमयनस्वर्भानुरायात्ययं
प्रच्छन्नं क्रियतां गजाजिनमिदं वैरस्य संस्तारकम् ।
शूलं निक्षिप दूरतः क्वचिदिदं युद्धापराधात्मकं
शम्भो ! तापस एव जीवतु भवान् घोरा रणे दानवाः ॥१६॥

महेशः—( सक्रोधम् )

समितिपरिचितोऽहं सर्वदा सर्वदैत्यैः
कथय कथय कोऽयं नारदो द्राङ्मुमूर्षुः ।
विरचयतु विशङ्कं नाकलोकं पिनाकः
प्रलयजलदनादस्पर्द्धिमौर्वीरवर्द्धिः ॥१७॥

इन्द्रः—(स्वगतं सहर्षम् ) दिष्टचा रौद्ररसवासितमानसो हरः संवृत्तः । साधु नारद ! साधु !! पारदोऽसि विपत्पारावारस्य ।

नारदः—( पार्श्वमवलोक्य ) अयि कुण्ठकुलिश सहस्राक्ष ! किन्नु विज्ञापयति भवान् ?

इन्द्रः—( सखेदं निःश्वस्य ) अयि महामुने ! किमहमुपहसनीयो विज्ञापयामि ? तथा हि—

काठिन्यं कुलिशादपेत्य हृदये सत्रासमावासितं
सद्यो यन्न विदीर्यते विधुरितं दुर्दैत्यदर्पोदयैः ।
एकोऽप्यस्ति न मे विलोचनलवश्चक्षुःसहस्रं तनौ
नूनं चित्रमिदं हृतं मम यशो यत्पश्यतः शत्रुभिः ॥१८॥

**महेशः**—( सोत्साहम् ) अयि जम्भशासन ! किमेवमुत्ताम्यसि ? कियन्मात्राणि तव दम्भोलिदावानलस्य दानवकुलतृणानि ?

**इन्द्रः**—( सप्रश्रयम् )

किं गर्वगर्भभणितिव्यसनेन शस्तो
दम्भोलिरेष न तु देव ! तव प्रभावः ।
औदास्यसुस्थमनसि त्वयि दानवानां
दोर्दण्डखण्डनविधौ कतमोऽस्ति शौण्डः ॥१९॥

**महेशः**—( सखेदम् ) अहह पुरुहूत ! किमिदं व्याहृतम् । स्वप्नेऽपि दिविषत्कार्येषु न स्यादुदासीन ईशानः ।

शूलं शिरःशूलकरं न कस्य
विपाककृत्कस्य न वा पिनाकः ।
ममेन्द्रसन्देशवशंवदस्य
कं वा न कुर्यात् परशुः परासुम् ॥२०॥

**यमः**—( ससंरम्भम् ) आः ! किं मृतममरैर्यद्दैत्यसमरसम्मर्दकेलिर्भगवन्तमुग्रं व्यग्रीकरिष्यति ? अयि देवदेव ! त्वद्वरप्रदानबलमाशङ्कमानास्तत्र वयं क्लीबाः संवृत्ताः स्मः । तदिदानीम्—

मोदन्तां करपङ्कजेषु गिरिश स्वस्थानि शस्त्राणि ते
सङ्ग्रामश्रमकातरो न हि न हि प्रेष्योऽस्ति ते कश्चन ।
स्वैरं मे समराङ्गणं विहरतां दण्डोऽयमत्युत्कटस्त्रुटचत्कीकसवावदूकदनुजप्रत्यङ्गभङ्गोद्यमैः ॥२१॥

**हुताशः**—( सक्रोधमाकाशे लक्ष्यं बद्ध्वा )

अयि ज्वालाः सर्वाः प्रलयसमयाटोपविषमाः
प्रगल्भध्वं यूयं मयि झटिति सङ्ग्रामरसिके ।
मया प्लुष्टे तस्मिन् प्रथममसुरानीकविपिने
सुराणामन्येषां भवतु कुपितं भस्मनि हुतम् ॥२२॥

**नारदः**—( सहर्षं विहस्य ) अयि वायो ! पश्य, पश्य निजमित्रस्य शौर्योत्साहम् ।

**वायुः**—सखे नारद !

निर्मूलमुन्मूलयिताहमेव
प्रभञ्जनः प्रागसुरद्रुमौघान् ।
दहत्वथैतान् मृतमारकारः
तनूनपात्तापयतां रविर्वा ॥२३॥

**नारदः**—( सहर्षम् ) दिष्टया वर्द्धतां वर्द्धतां धर्मः । एवमुद्धतक्रोधेषु देवेषु दानवानामम्भसि मग्नानामपि क्व जीवितम् ?

**वरुणः**—( सगर्वं सप्रश्रयम् )

कण्ठन्यस्तकठोरपाशविवशान्देवद्रुहो दुर्द्दमान्
(आत्मानं निर्दिश्य)
नेष्यत्येष निरङ्कुशो जलपतिः पातालमूलं बलात् ।
तद्वैलक्ष्यजुषो विना रणरसं भग्नप्रतिज्ञाः सुरा
न क्रुध्यन्ति यथा तथा कुरु मुने त्वामित्थमभ्यर्थये ॥२४॥

**नारदः**—सखे कुबेर ! धनदोऽसि, तदिदानीं निधनदो भव विद्विषाम् ।

**कुबेरः**—सखे नारद !

मद्दोःस्तम्भविजृम्भितैस्त्रिनयनप्रेमानुरोधेन वा
सार्द्धं नैव मया मिलन्ति समरश्रद्धालवो दानवाः ।
तन्मे भूरिदिनानि सङ्गरमहादुर्भिक्षदूनात्मनः
सम्प्रत्येष रणोत्सवः प्रभविता हर्षाय शम्भोः पुरः ॥२५॥

**नारदः**—( सहर्षम् ) अहह ! दिष्टया कृतकृत्योऽस्मि संवृत्तस्तदिदानीं नेतरस्य कस्याप्यपेक्षा ।

**कृत्यः**—( सक्रोधं स्वगतम् ) कथं सामान्यगणनयाऽपि न मां गणयत्ययं वटुः । तदेवं तावत् ( प्रकाशम् )—

देवद्रोहिविपाटनव्यतिकरे वीरोऽहमेकः परं
तादृङ्मे त्वदनादरेण गरिमा किं नारद ! क्षीयते ।
आस्ते कौशलमात्रमेव कलहक्रीडासु ते चापलं
भीरुः शूर इति स्थितिं कथमहो जानाति विप्रो भवान् ॥२६॥

**नारदः**—( स्वगतं सहर्षम् ) दिष्टया असावप्यस्मत्पक्ष एव तावत्संवृत्तः । क्रुद्ध्यतु क्रुद्ध्यतु । सुतरां प्रियं प्रियं मे । (प्रकाशं सप्रश्रयम्)—

धुरीणो वीराणां रजनिचर! कोऽन्योऽस्ति भवतः
प्रधानं शास्त्राणां तव परमसिः क्रीडति करे।
त्वमभ्यर्थ्यो योद्धं किमिव दिविषत्कार्यपरवान्
विधिः केनादष्टो घटयति मुहुर्विष्टपमिदम् ॥२७॥

**नन्दी** —( सस्पृहम् ) अयि सुराचार्य ! सुष्ठु मामेवंविधदानवविशेषशुश्रूषा मुखरीकरोति। तथा हि—

अस्तोदयस्थितिरयं किमु लङ्घनीया
केनापि किन्तु पुरुषप्रवरः स एकः।
यत्कातरा बहुतराः सहसा समेत्य
तद्वैशसव्यतिकरं मुहुरारभन्ते ॥२८॥

तत्कथय कोऽयं वीरशिरोमणिः ?

**बृहस्पतिः**—अयि शिलादसूनो ! कथितः किमेष विज्ञेयः अन्तरिक्षचरस्त्रिपुराभिधानो धूमकेतुरिव त्रैलोक्यस्य ?

दुष्प्रेक्षाः प्रसरत्प्रभूतहुतभुग्ज्वालौघनीराजित-
व्योमानो मुखरस्फुलिङ्गपटलप्रच्छादिताशामुखाः।
गङ्गाम्भःकवचे शिवस्य शिरसि प्रेङ्खन्ति तन्मार्गणा-
स्थाङ्गारान्न पुनः शृणोति दिविषद्दुर्दैवतस्तत्कृतान् ॥२९॥

न चायमन्तरिक्षचरोऽन्तरिक्षमेव क्षिणोति। क्षितिरपि सुतरामनेनैवोत्ताप्यते। सोऽपि रसातलनायको भुजङ्गराजो भग्न एवानेन।

( ततः प्रविशति पृथिवी )

**पृथिवी** —( सोद्वेगमाकाशे लक्ष्यं बद्ध्वा )

भअवं कमलुब्भव ! किं तुमं उआलभेमि ? अहो दे दुव्विलसिदं !
( छाया ) (भगवन् कमलोद्भव ! किं त्वामुपालभे ? अहो ते दुर्विलसितम् !)

साधारणा अट्ठ कुलाअला णं
ते दिग्गआ सो अ भुअङ्गराओ।
मं धारिऊणं इअ वित्थरेण
भंजेसि किं[इ]दारुणदाणवेहिं ॥३०॥

(छाया) ( साधारणा अष्टकुलाचला ननु
ते दिग्गजाः स च भुजङ्गराजः।
मां धृत्वा इति [हि] विस्तरेण
भञ्जयसि किं दारुणदानवैः ॥३०॥)

ता ण तुमं उवसप्पिस्सं। तं य्येव चंदसेहरं सरणं गमिस्सं, जो तुम्हं पि णिम्मेदि। (छाया) [ तन्न त्वामुपसर्पिष्ये। तमेव चन्द्रशेखरं शरणं गमिष्यामि यस्त्वामपि निर्माति। ]

( परिक्रामन्ती स्खलनमभिनीय सवैलक्ष्यम् )

अहह, सुट्ठु अवलम्हि संजादा। ता को मह आलंवणं। दूरे सो भुअङ्गराओ। (छाया) [ अहह, सुष्ठु अवलास्मि सञ्जाता। तत्को ममालम्बनम्। दूरे स भुजङ्गराजः। ]

( प्रविश्य पुरुषवेषः शेषः )

**शेषः**—भगवति भूतधात्रि ! मामवलम्बस्व।

**पृथिवी**—( विलोक्य ) कधं णायराओ सम्पत्तो ! अइ णाअराअ ! लज्जामि वज्जमइआ इधवि तुमं अवलम्बंती। किं विसुमरिदं मे दुव्विसहदाणवसरासारघुम्मन्ति मं उव्वहन्तस्स तुह दुव्वहदुप्फडणिम्मोअपट्टं फणाचक्कं। (छाया) [ कथं नागराजः सम्प्राप्तः। अयि नागराज, लज्जे वज्रमयी अत्र त्वामवलम्बमाना। किं विस्मृतं मया दुर्विषहदानवशरासारघूर्णमानां मामुद्वहतस्तव दुर्वहदुष्फटनिर्मोकपट्टफणाचक्रम्। ]

**शेषः**—भगवति ! भाग्यवानस्मि, यदेवं सर्वाधारभूता धरादेवी सम्भावयति। तदवलम्बस्व। निकट एवायं भगवान् भवानीपतिः पुरन्दरप्रमुखदिविषत्परिषदुपास्यमान आस्ते। तदेहयुपसर्पावः।

( उभावुपसर्पतः )

**पृथिवी**—भअवं भग्ग सअललोअसग्गसंहारपरित्ताणकारण, णमो दे णमो दे। (छाया) [ भगवन् भर्ग, सकललोकसर्गसंहारपरित्राणकारण, नमस्ते, नमस्ते। ]

**शेषः**—( सप्रश्रयम् ) अष्टतनुसंनिभागाभ्युपगतनिखिलभुवनकार्यनुरूपज ! नमस्ते, नमस्ते।

**महेशः**—( ससम्भ्रमम् ) आः किमेतत्।

वाष्पाकुलास्या विकलं वलन्ती
विशालनिःश्वासविलोलनेत्रा।
उपस्थिता मूर्तिमती क्षमाऽधः
अस्मन्मनो मेदिनि सादयन्ती ॥२१॥

धुरीणो वीराणां रजनिचर! कोऽन्योऽस्ति भवतः
प्रधानं शास्त्राणां तव परमसिः क्रीडति करे।
त्वमभ्यर्थ्यो योद्धं किमिव दिविषत्कार्यपरवान्
विधिः केनाऽदृष्टो घटयति मुहुर्विष्टपमिदम् ॥२७॥

**नन्दी**—( सस्पृहम् ) अयि सुराचार्य ! सुष्ठु मामेवंविधदानवविशेषशुश्रूषा मुखरीकरोति। तथा हि—

अस्तोदयस्थितिरयं किमु लङ्घनीया
केनापि किन्तु पुरुषप्रवरः स एकः।
यत्कातरा बहुतराः सहसा समेत्य
तद्वैशसव्यतिकरं मुहुरारभन्ते ॥२८॥

तत्कथय कोऽयं वीरशिरोमणिः ?

**बृहस्पतिः**—अयि शिलादसूनो ! कथितः किमेष विज्ञेयः अन्तरिक्षचरस्त्रिपुराभिधानो धूमकेतुरिव त्रैलोक्यस्य ?

दुष्प्रेक्षाः प्रसरत्प्रभूतहुतभुग्ज्वालौघनीराजित-
व्योमानो मुखरस्फुलिङ्गपटलप्रच्छादिताशामुखाः।
गङ्गाम्भःकवचे शिवस्य शिरसि प्रेङ्खन्ति तन्मार्गणा-
स्थाङ्कारान्न पुनः शृणोति दिविषद्दुर्दैवतस्तत्कृतान् ॥२९॥

न चायमन्तरिक्षचरोऽन्तरिक्षमेव क्षिणोति। क्षितिरपि सुतरामनेनैवोत्ताप्यते। सोऽपि रसातलनायको भुजङ्गराजो भग्न एवानेन।

( ततः प्रविशति पृथिवी )

**पृथिवी**—( सोद्वेगमाकाशे लक्ष्यं बद्ध्वा )

भअवं कमलुब्भव ! किं तुमं उआलभेमि ? अहो दे दुव्विलसिदं !
( छाया ) (भगवन् कमलोद्भव ! किं त्वामुपालभे ? अहो ते दुर्विलसितम् !)

साधारणा अट्ठ कुलाअला णं
ते दिग्गआ सो अ भुअङ्गराओ।
मं धारिऊणं इअ वित्थरेण
भंजेसि किं[इ]दारुणदाणवेहिं ॥३०॥

(छाया) ( साधारणा अष्टकुलाचला ननु
ते दिग्गजाः स च भुजङ्गराजः।
मां धृत्वा इति [हि] विस्तरेण
भञ्जयसि किं दारुणदानवैः ॥३०॥)

ता ण तुमं उवसप्पिस्सं। तं य्येव चंदसेहरं सरणं ममिस्सं, जो तुमं पि णिम्मेदि। ( छाया ) [ तन्न त्वामुपसर्पिष्ये। तमेव चन्द्रशेखरं शरणं गमिष्यामि यस्त्वामपि निर्माति। ]

( परिक्रामन्ती स्खलनमभिनीय सवैलक्ष्यम् )

अहह, सुट्ठु अबलम्हि संजादा। ता को मह आलंबणं। दूरे सो भुअङ्गराओ। ( छाया ) [ अहह, सुष्ठु अबलास्मि सञ्जाता। तत्को ममालम्बनम्। दूरे स भुजङ्गराजः। ]

( प्रविश्य पुरुषवेषः शेषः )

शेषः—भगवति भूतधात्रि ! मामवलम्बस्व।

पृथिवी—( विलोक्य ) कधं णायराओ सम्पत्तो ! अइ णाअराअ ! लज्जामि वज्जमइआ इधवि तुमं अवलम्बंती। किं विसुमरिदं मे दुव्विसहदाणवसरासारघुम्मन्ति मं उव्वहन्तस्स तुह दुव्वहदुप्फडणिम्मोअपट्टं फणाचक्कं। (छाया) [ कथं नागराजः सम्प्राप्तः। अयि नागराज, लज्जे वज्रमयी अत्र त्वामवलम्बमाना। किं विस्मृतं मया दुर्विषहदानवशरासारघूर्णमानां मामुद्वहतस्तव दुर्वहदुष्फटनिर्मोकपट्टफणाचक्रम्। ]

शेषः—भगवति ! भाग्यवानस्मि, यदेवं सर्वाधारभूता धरादेवी सम्भावयति। तदवलम्बस्व। निकट एवायं भगवान् भवानीपतिः पुरन्दरप्रमुखदिविषत्परिषदुपास्यमान आस्ते। तदेह्युपसर्पावः।

( उभावुपसर्पतः )

पृथिवी—भअवं भग्ग सअललोअसग्गसंहारपरित्ताणकारण, णमो दे णमो दे। (छाया) [ भगवन् भर्ग, सकललोकसर्गसंहारपरित्राणकारण, नमस्ते, नमस्ते। ]

शेषः—( सप्रश्रयम् ) अष्टतनुसंविभागाभ्युपगतनिखिलभुवनकार्यवृषध्वज ! नमस्ते, नमस्ते।

महेशः—( ससम्भ्रमम् ) आः किमेतत्।

वाष्पाकुलास्या विकलं चलन्ती
विशालनिःश्वासविलोलवेणिः।
उपस्थिता मूर्तिमती त्वमाधिः
अस्मन्मनो मेदिनि सादयन्ती ॥३१॥

तत्कथय किमेतत् ? भगवति महि, सकललोकमहनीये महदेतदत्याहितम् ।

कादम्बिनी काचिदपूर्वरूपा
त्वमुर्वरे, भूरिरसोपगूढा ।
ऊर्ध्वस्थलोकानपि हव्यकव्य-
प्रवर्षणैः प्रीणयसे तलस्था ॥३२॥

**पृथिवी**—( सप्रश्रयम् ) भगवन् ! केयमात्मविकत्थनता । ननु त्वन्मूर्तिरहमस्मि ।

**महेशः**—( शेषमालोक्य )

चलाचलधरोत्कृत्तफणाव्रणगणातुरः ।
अदशन्नपि नागेन्द्र, त्वं नो दशसि मानसम् ॥३३॥

**शेषः**—( ससंरम्भम् ) अयि देवदेव ! त्वदादेशवशंवदोऽस्मि न पुनरहमपर्याप्तः ।

सहस्रेणास्यानां प्रसरदुरुनिःश्वासमरुता
पृथुज्वालाजालं किमु वियति वर्षामि न विषम् ।
यदीयप्लोषेन त्रिपुरदनुजोन्मूलनविधौ
न मन्त्रस्तन्त्रो वा प्रभवति समाधानकरणे ॥३४॥

**नारदः**—( सहर्षाश्चर्यम् ) साधु, साधु न खलु क्ष्माभारोद्वहन इव समरभारोद्वहनेऽपि धुरीण एव भुजङ्गराजः। ( शिशिरबाधामभिनीय ) आः, किं पुनरेवंविधदुःखोष्मसम्बाधेऽपि शिशिरवैधुर्यमुज्जृम्भते । ( पुरोऽवलोक्य ) कथमयं पर्वतराजः प्राप्तः । ( सहर्षम् ) एह्येहि शैलराज ! हरश्वशुर ! शिशिरय त्रिपुरपरिभवोत्तप्तं सुरसमूहम् ।

( प्रविश्य, हिमवान् )

**हिमवान्**—( सपश्चात्तापं हस्तं विधुन्वन् ) अयि मुनीन्द्र !

अहह ! किमिह कुर्मो नायकस्यामराणां
कुलिशदलितपक्षाः पङ्गवो यत्कृताः स्मः ।
असमचयभराढ्याः स्वैरमुड्डीयमानाः
किमु न दनुजसार्थं खेचरं चूर्णयामः ॥३५॥

तदिदानीं स्थावरोऽपि कामरूपो विरूपाक्षापेक्षां पूरयिष्ये ।

**नारदः**—( सप्रश्रयम् ) अयि दुर्लक्ष्य त्र्यक्ष ! क इदानीं प्रतीक्ष्यते । त्रिपुरोपरुद्धे देवयाने सूर्याचन्द्रमसौ परमिह नागतौ ।

**नन्दी** —( दिशोऽवलोक्य, ससम्भ्रमम् ) आः ! किमेतत् ।

रात्रिर्गतैव विहरन्ति न वारिवाहा-
स्तारुण्य एव तरणिः परिणाममेति ।
आः, कोऽयमद्भुतमयः समयस्तनोति
दिक्चक्रमक्रममिलत्तिमिरप्ररोहम् ॥३६॥

( सर्वे सचमत्कारमालोकयन्ते )

( नेपथ्ये )

दैत्यान्तकारि हरिचक्रपराक्रमस्य
यो हीनतां पिशुनयत्यविनष्टमौलिः ।
सोत्कर्षरोषभरभीषणनिःपिधान-
दंष्ट्रः स एष विनिहन्ति विधुन्तुदोऽर्कम् ॥३७॥

तत्परित्रायतां यः कश्चिदिह शूरतरः सुरोऽस्ति ।

**महेशः**—( ससंरम्भम् ) नन्दिन्नुपनय मे चापम् । द्रागस्तु निःशोकः सूर्यलोकः ।

**नन्दी** —आः ! कोऽयमसद्ग्रहो विगतविग्रहं निगृहीतं राहुग्रहं ग्रहीतुम् । त्रिपुरदाह एवारभ्यताम्, येनोपरुद्धदेवयानेन धर्मपथो निर्मूल-मुन्मूल्यते ।

( नेपथ्ये )

( सक्रोधम् ) आः ! क एष धर्ममुन्मूलयति ?

धर्मः सदैव बलवान्विजयैकहेतु-
र्धर्मोऽभिरक्षति परं स्मरणप्रयत्नात् ।
ते जम्भकैटभगजान्धकतारकाद्या
धर्मद्रुहः कथय, केऽभ्युदयं प्रपेदुः ॥३८॥

**नारदः**—( सहर्षम् ) कथमागत एव मम ज्येष्ठो भ्राता ब्रह्मनन्दनो धर्मः ।

( प्रविश्य )

**धर्मः**—भगवन् अशेष ! जगदाधार ! एष त्वां धर्मः प्रणमति ।

**महेशः**—अयि धर्म ! किमेवमुच्यते ? अस्माकमपि वृषभरूपधारस्त्वमाधारः । इहोपसीदतु भवान् ।

**धर्मः**—महेश ! त्रिपुरोपरुद्धे जगति इहैव मे स्थानम् ।

( इत्युपविशति [धर्मः] )

**नारदः**—( सहसोपसृत्य, सप्रश्रयम् ) भगवन् धर्म ! एष त्वां कनिष्ठो नारदोऽभिवादयते ।

( इति प्रणमति )

**धर्मः**—( सहर्षम् ) वत्स कलिप्रिय !

सुधान्धसां पक्षपरिग्रहेण
विनिग्रहेणोन्मददानवानाम् ।
निष्पादयिष्यामि कलिं कठोरं
त्वत्प्रीतये चात्मविवृद्धये च ॥३९॥

**नारदः**—( सहर्षम् ) भगवन् ! त्वयि सपक्षे देवानां भविष्यति भगवान्नारायणः सेनानीरतः को विजयसंशयः ।

"यतो धर्मस्ततो कृष्णो यतः कृष्णस्ततो जयः" ॥

**कार्तिकेयः**—( सक्रोधम्, स्वगतम् ) कथं मां सेनान्यं निरस्य नारायणः सुराणां सेनानीर्भविष्यति ?

( प्रकाशम्, ससंरम्भम् ) अयि नारद !

हित्वा पौरुषवासनां न महिलाभावं गमिष्याम्यहं
याञ्चोत्सारितगौरवो न हि मुने, ह्रस्वो भविष्यामि वा ।
कूर्मक्रोडझषादिरूपविगतिर्नैवानुभाव्या मया
सेनानीः पुरुषोत्तमो दिविषदां योग्यो न मादृग्जनः ॥४०॥

**नारदः**—( सहर्षं [ स्वगतम् ] ) दिष्ट्या वर्द्धते दिविषद्वर्गः । यदयं संरब्धः शम्भुनन्दनः ।

( सहसोपसृत्य कार्तिकेयं शिरस्याघ्राय )

अबालविक्रमो बालः शूलिनो मोदतामयम् ।
अस्य प्रसादतो देवा निर्जरा यान्तु वृद्धताम् ॥ ४१ ॥

**महेशः**—अयि कार्त्तिकेय ! किमनभिज्ञः प्रलपसि ? मद्बन्धुर्मधुकैटभारिः पितृव्यस्ते भवति ।

**कार्तिकेयः**—( सप्रश्रयम् ) यदि पितृव्यस्तत्किं मयि स्थिते पिता, पितृव्यः, पितामहो वा रणायासमनुभविष्यति ?

**महेशः**—( सस्मितम् ) अयि नारद ! गच्छ । समानय पितामहकृष्णौ । मा कदाचन तद्वरप्रदानगर्वितास्त्रिपुरासुरा भविष्यन्ति । तत्तदनुमतेनैव तान्निर्दहामि ।

**नारदः**—यथाऽऽदिशति देवः । ( इति निष्क्रामति )

**महेशः**—अयि महेन्द्रादयो देवाः ! सर्वे सज्जीभवत, निजनिजदिङ्मुखेषु । एष निष्पन्न एव त्रिपुरदाहः । रक्षणीयः परमिह मायाप्रपञ्चो दुर्लक्षो दानवानाम् ।

**इन्द्राद्याः**—( सप्रश्रयं, सहर्षम् )

यथाऽऽज्ञापयति देवः ।

( इति सर्वे निष्क्रान्ताः )

॥ इति महामात्यवत्सराजविरचिते त्रिपुरदाहाभिधाने डिमे प्रथमोऽङ्कः ॥



**महेशः**—अयि धर्म ! किमेवमुच्यते ? अस्माकमपि वृषभरूपधारस्त्वमाधारः । इहोपसीदतु भवान् ।

**धर्मः**—महेश ! त्रिपुरोपरुद्धे जगति इहैव मे स्थानम् ।

( इत्युपविशति [धर्मः] )

**नारदः**—( सहसोपसृत्य, सप्रश्रयम् ) भगवन् धर्म ! एष त्वां कनिष्ठो नारदोऽभिवादयते ।

( इति प्रणमति )

**धर्मः**—( सहर्षम् ) वत्स कलिप्रिय !

सुधान्धसां पक्षपरिग्रहेण
विनिग्रहेणोन्मददानवानाम् ।
निष्पादयिष्यामि कलिं कठोरं
त्वत्प्रीतये चात्मविवृद्धये च ॥३९॥

**नारदः**—( सहर्षम् ) भगवन् ! त्वयि सपक्षे देवानां भविष्यति भगवान्नारायणः सेनानीरतः को विजयसंशयः ।

"यतो धर्मस्ततो कृष्णो यतः कृष्णस्ततो जयः" ॥

**कार्तिकेयः**—( सक्रोधम्, स्वगतम् ) कथं मां सेनान्यं निरस्य नारायणः सुराणां सेनानीर्भविष्यति ?

( प्रकाशम्, ससंरम्भम् ) अयि नारद !

हित्वा पौरुषवासनां न महिलाभावं गमिष्याम्यहं
याञ्चोत्सारितगौरवो न हि मुने, ह्रस्वो भविष्यामि वा ।
कूर्मक्रोडझषादिरूपविगतिर्नैवानुभाव्या मया
सेनानीः पुरुषोत्तमो दिविषदां योग्यो न मादृग्जनः ॥४०॥

**नारदः**—( सहर्षं [स्वगतम्] ) दिष्ट्या वर्द्धते दिविषद्वर्गः । यदयं संरब्धः शम्भुनन्दनः ।

( सहसोपसृत्य कार्तिकेयं शिरस्याघ्राय )

अबालविक्रमो बालः शूलिनो मोदतामयम् ।
अस्य प्रसादतो देवा निर्जरा यान्तु वृद्धताम् ॥ ४१ ॥

**महेशः**—अयि कार्त्तिकेय ! किमनभिज्ञः प्रलपसि ? मद्बन्धुर्मधुकैटभारिः पितृव्यस्ते भवति ।

कार्तिकेयः—( सप्रश्रयम् ) यदि पितृव्यस्तत्किं मयि स्थिते पिता, पितृव्यः, पितामहो वा रणायासमनुभविष्यति ?

महेशः—( सस्मितम् ) अयि नारद ! गच्छ । समानय पितामहकृष्णौ । मा कदाचन तद्वरप्रदानगर्वितास्त्रिपुरासुरा भविष्यन्ति । तत्तदनुमतेनैव तान्निर्दहामि ।

नारदः—यथाऽऽदिशति देवः । ( इति निष्क्रामति )

महेशः—अयि महेन्द्रादयो देवाः ! सर्वे सज्जीभवत, निजनिजदिङ्मुखेषु । एष निष्पन्न एव त्रिपुरदाहः । रक्षणीयः परमिह मायाप्रपञ्चो दुर्लक्षो दानवानाम् ।

इन्द्राद्याः—( सप्रश्रयं, सहर्षम् )

यथाऽऽज्ञापयति देवः ।

( इति सर्वे निष्क्रान्ताः )

॥ इति महामात्यवत्सराजविरचिते त्रिपुरदाहाभिधाने डिमे प्रथमोऽङ्कः ॥



## अथ द्वितीयोऽङ्कः



( ततः प्रविशति अलीकः )

**अलीकः**—( पुरोऽवलोक्य ) कधं एसो मह पिअवअस्सो विवरीदो गच्छदि। अच्छरियं अच्छरियं जइ एसो अन्धो ता कधं तुरिदपदं परिक्कामदि। जदि ण अन्धो ता कधं ण मं पेक्खदि। भोदु सद्दावेमि। ( प्रकाशम् ) अयि विवरीद विवरीद कहिं पत्थिदोसि ? (छाया) [ कथमेष मम प्रियवयस्यो विपरीतो गच्छति। आश्चर्यमाश्चर्यम्। यदि एषोऽन्धस्तत्कथं त्वरितपदं परिक्रामति। यदि नान्धस्तत्कथं न मां प्रेक्षते। भवतु। शब्दापयामि। ( प्रकाशम् ) अयि विपरीत, विपरीत, कुत्र प्रस्थितोऽसि ? ]

**विपरीतः**—( सहसाऽवलोक्य, सहर्षम् ) पिअवअस्स अलिअ, दिट्ठिआ तए वाहरिदोम्हि। ( छाया ) [ प्रियवयस्य अलीक, दिष्ट्या त्वया व्याहृतोऽस्मि। ]

अण्णहा तुमं अपेच्छिअ गदो तुमं अन्नेसअन्तो खिज्जन्तोम्हि। ( छाया ) [ अन्यथा त्वामप्रेक्ष्य गतस्त्वामन्विष्यन् खिद्यन्नस्मि। ]

**अलीकः**—किं उण तुमं मं ण पेक्खसि ?

( छाया ) [ किं पुनस्त्वं मां न प्रेक्षसे ? ]

**विपरीतः**—वअस्स, गरुअरज्जकज्जभारुव्वहणवावडहिअएण ण मए तुमं पेक्खिदोसि। ( छाया ) [ गुरुराज्यकार्यभारोद्वहनव्यापृतहृदयेन न मया त्वं प्रेक्षितोऽसि। ]

**अलीकः**—( साशङ्कम् ) वअस्स ! केरिसं रज्जकज्जं ?

( छाया ) [ वयस्य ! कीदृशं राज्यकार्यम् ?]

**विपरीतः**—तिउरणाहपरिभूदेहिं देवेहिं मिलिअ मंतिऊण हरिविरिंचिपासं पेसिदो नारदोत्ति चरेहिं दाणवणाहस्स विन्नत्तं। ( छाया ) [ त्रिपुरनाथपरिभूतैर्देवैर्मिलित्वा मन्त्रयित्वा हरिविरिञ्चिपार्श्वं प्रेषितो नारद इति चरैर्दानवनाथस्य विज्ञप्तम्।

अलीकः—( सावज्ञम् ) दिग्गअदूसणत्थं ससआणं एस मेलओ, जं तिउरणाहणिम्महणत्थं अमराणं मेलओ। ( छाया ) [ दिग्गजदूषणार्थं शशकानामेष मेलकः, यत्त्रिपुरनाथनिर्म्मथनार्थममराणां मेलकः। ]

विपरीतः—( सक्रोधम् ) अयि अलिअ, शैशवादो पहुदि राअउलपवट्टिदो खु तुमं णअसअणिउणो कहं एवं मन्तेसि। णं परमाणुमेत्ते वि वैरिए अपमत्तेण भोदव्वं। ( छाया ) [ अयि अलीक, शैशवात्प्रभृति राजकुलप्रवर्धितः खलु त्वं नयशतनिपुणः कथमेवं मन्त्रयसि? ननु परमाणुमात्रेऽपि वैरिणि अप्रमत्तेन भवितव्यम्। ]

अलीकः—ता कधेसु किं संदिट्ठं तिउरणाहेण ?

( छाया ) [ तत्कथय किं सन्दिष्टं त्रिपुरनाथेन ? ]

विपरीतः—( कर्णे ) एवमेव।

अलीकः—( सहर्षम् ) साहु साहु, सुमंतिदं एदं।

( छाया ) [ साधु, साधु सुमन्त्रितमेतत्। ]

विपरीतः—( सगर्वम् ) वअस्स, एदस्सिं कम्मे तए मए विभणिदव्वं विपरीदो असुराणं विजओ, अलिओ देवाणं खओ। ता गच्छ तुमं विप्पयारसु विरिचं। नारओ विन्हुसआसे चिट्ठदि। अहंपि हरं विप्पआरिअ पुरंदरपहुदिदेवे विप्पआरेमि। ( छाया ) [ वयस्य, एतस्मिन् कर्म्मणि त्वया मयाऽपि भणितव्यम्, विपरीतोऽसुराणां विजयः, अलीको देवानां क्षयः।" तद्गच्छ, त्वं विप्रतारय विरञ्चिम्। नारदो विष्णुसकाशे तिष्ठति। अहमपि हरं विप्रतार्य पुरन्दरप्रभृतिदेवानपि विप्रतारयामि। ]

**( इति निष्क्रान्तौ )**

**( अत्र विष्कम्भकः )**

**[ततः प्रविशति नारायणो, नारदश्च]**

**नारायणः—( साशङ्कम् ) किं पुनरद्य नारदः शारदाम्बुद इव नीरसो विच्छायकायः स्थितः ? इयमपि वीणा स्कन्धावलम्बिनी भारायते।**

**नारदः**—( सखेदं, निःश्वस्य ) अयि वैकुण्ठ !

करुणरुदितनादव्यक्तिमासूत्रयन्ती
प्रकटमभिदधाना मूर्च्छनां निर्ज्जराणाम् ।
तनुरियमसुरारे वादिता दुःखवीणा
न हि मम सुखयेत् त्वां तेन मूकः स्थितोऽस्मि ॥ १ ॥

**नारायणः**—( ससम्भ्रमम् ) अत्याहितं अत्याहितम् ! अयि नारद, सकलभुवनवृत्तान्तविशारदोऽसि । तदावेदय कस्य अयं सुचिरमस्ताय क्षणिकोऽभ्युदयः ।

**नारदः**—अहो ! शुभदशा दानवानां, यद्विश्वव्यापिना त्वया तदर्थमन्यः पर्यनुयुज्यते । तदहं किं न विज्ञापयामि ?

भुवनत्रयमिदमखिलं त्रिपुरप्रभुपरिभवानलज्वलितम् ।
क्षणमपि न शमं लभते त्रिभुवनभर्तुः पुरो भवतः ॥ २ ॥

अपि च,

आकाशे नावकाशः क्षणमपि भवति स्वर्वधूनां विहर्त्तुं
योगे वा संयुगे वा विघटिततनवो नार्कसम्पर्कभाजः ।
संरुद्धे देवयाने प्रसरदुरुमदत्रैपुरानीकचक्रै-
रप्यग्निष्टोमयाजी प्रभवति न पुरो पौरहूतीमुपैतुम् ॥ ३ ॥

**नारायणः**—अयि नारद ! भवानप्येवमाह । किन्न पश्यति भवान् उग्रतपोभिरुग्रमाराध्य दानवा उग्रा भवन्ति । किमहं परवान् करवै ?

गदा सदा दानवदारयित्री
सौदर्शनं दर्शनमेव घोरम् ।
न मन्दशक्तिर्मम नन्दकोऽयं
निदेशमेवैशमहं समीहे ॥ ४ ॥

**नारदः**—( सोपहासम् ) अहो ! प्रभावोऽसुरसुकृतानाम्, यैः सर्वज्ञा अप्यज्ञतां प्रापिताः । शम्भुरेवं जानीते, जनार्दनदत्तवरास्त्रिपुरासुराः । न च भवान् हरवराशङ्की प्रतिकूलेष्वपि तेषु प्रातिकूल्यमवलम्बते । एवमाह मां भगवान्भर्गः । द्वितीयः किल ममात्मा मुरारिरर्द्धाङ्गहरस्तत्कदाचित् तद्दत्तवरमसुरं प्रहरते 'मह्यं स कुप्येत्, तत्त्वं गत्वा निरूपय' ।

**नारायणः**—( सप्रश्रयम् ) अयि नारद !

देहार्द्धसम्बन्धवरप्रदानैः
स्वयं स मां लालयतु प्रसन्नः ।
सङ्ग्रामसेवावसरेषु शम्भो-
र्मदग्रतः स्यादधिको न नन्दी ॥ ५ ॥

( ततः प्रविशति नन्दी )

**नन्दी**—अहो ! देवानामभाग्यसम्पत्, यद्देवानामियमितरेतरकलहवल्ली पल्लविता । ( समन्तादवलोक्य ) कथं प्राप्त एवास्मि विष्णुलोकम् । तदिह क्व नारायणः ? ( पुरोऽवलोक्य ) कथमयं नारायणो नारदेन सह विश्रब्धं मन्त्रयमाणोऽस्ति । ( साश्चर्यम् ) आः ! किमेतदयं हि रुदितोच्छूननयनः कैटभारिपरिभवं भवाग्रतोऽभिधाय सोद्वेगमपक्रान्तः । तत्कथमत्रा ' ' ऽवलोक्यते ? अथवा दुरधिगमगतिः नारदस्य । भवतु । उपसर्पामि । ( उपसृत्य ) अयि पुरुषोत्तम ! तथा महेशमुपहस्य किमेवं स्थीयते ? । अपि च—

त्वयार्चितो यो नयनाम्बुजेन
चकार यः सर्वजगत्प्रभुं त्वाम् ।
गौरीव येनार्द्धतनौ धृतस्त्वं
स्थाणुः स शौरे ! हसनीय एव ॥ ६ ॥

**नारदः**—( सक्रोधम् ) आः मृषावादिन् ! किमेवमतिनिन्दितमकस्मात् व्याहरसि ?

**नन्दी**—( सक्रोधम् ) अयि नारद ! सत्यं कलहप्रियोऽसि । किन्त्वेवं हरिहरयोः कलहकारिणा न त्वया भवितव्यम् । भवतैवेति भवोऽभिहितः । कैटभारिः किल मां साधिक्षेपमित्थमाह,—'किमहं स्थाणोस्तस्य निदेशकारः । स्वैरमहं दानवानुन्नमयामि, नमयामि वा' ।

**नारदः**—( साश्चर्यं, ससम्भ्रमम् ) आः ! कदा अहं व्यावृत्त्य जगदीशसकाशं गतः ? ।

**नारायणः**—( ध्यानं नाटयित्वा, सस्मितम् ) अयि शिलादसूनो ! अयि नारद ! आस्तां आस्तां वाक्कलहः । केनापि मायाविना दानवेन नारदरूपचतुरेण भगवन्तं नूनं हरो विप्रलब्धः । तदचिरेण चन्द्रचूडं सम्भावयतु नन्दी, यावन्न किमप्यत्याहितमापतति । अहमपि भगवन्तं विरिञ्चिमादाय आगतोऽस्मि ।

**नन्दी**—( सव्रीडम् ) यथाऽऽदिशति हृषीकेशः ।

( इति निष्क्रान्तः )

**नारायणः**—गच्छ, नारद ! समानय भगवन्तं कमलासनम् ।

( ततः प्रविशति कपटनारदेनानुगम्यमानो विरिञ्चिः )

**विरिञ्चिः**—( सक्रोधम् ) तात नारद ! स त्वं मम पुत्रो नारद एव न भवसि, यदेवंविधं परिभवं चक्रिणः सोढवानसि ।

**कपटनारदः**—( स्वगतं, साशङ्कम् ) किं मुणिदोम्हि ? आदु कुविदा एस एवं वाहरदि । तह वि एयं दाव । ( छाया ) [ किं ज्ञातोऽस्मि ? अथवा कुपित एष एवं व्याहरति । तथापि एतत् तावत् । ] ( प्रकाशम् ) अयि तात, भगवति भर्गे गोविन्दे च त्वयीवाहं विनयेन वर्त्ते ।

**विरिञ्चिः**—साधु, साधु । ( सर्वतो विभाव्य ) अये ! समागत एवास्मि विष्णुलोकम् । तत्कथं करोमि । ( स्वगतम् ) युद्धदुर्मदो मुरारिर्वरं शापोदकेनैव तं शमयामि । ( प्रकाशम् ) अयि नारद ! न सहे समरविस्तरेण कालक्षेपम्, तदहं शापेनैव केशवं शवीकरोमि ।

**कपटनारदः**—( तूष्णीं तिष्ठन्, स्वगतं, सहर्षम् ) दिट्ठिआ कअकय्यो भविस्सं । ( छाया ) [ दिष्टया कृतकार्यो भविष्यामि । ]

**विरिञ्चिः**—( सक्रोधमुच्चैः ),

सोऽन्यः सिन्धुपतिर्युगान्तविलसद्वेलासमुल्लङ्घने
यस्मिन् कृष्ण, भवान् वटद्रुमशिखाशाखाश्रयेणोद्धृतः ।
शापाम्भोजलधिः प्रकोपवडवावैश्वानरोत्सङ्गितो
ब्राह्मः कोऽप्ययमद्भुतोऽभ्युदयते यस्ते निवापाञ्जलिः ॥ ७ ॥

**कृष्णः**—( श्रुत्वा, सभयम् ) आः ! किमेतत्, किमेतत् ?

( इत्युत्तिष्ठति )

**नारदः**—( ससम्भ्रमं, वेगादुपेत्य ) तात ! धिक् त्वां, धिक् त्वाम् । किमनुचिते प्रवर्त्तसे ? एष त्वां हरिरभ्युद्गच्छति ।

( कपटनारदस्तिरोधत्ते )

**विरिञ्चिः**—( नारदं दृष्ट्वा ) कथमयं नारदः ?

( पार्श्वमवलोक्य कपटनारदमदृष्ट्वा साश्चर्यमधोमुखस्तिष्ठति )

**नारायणः**—( सस्मितं, सप्रश्रयम् ) आर्य पितामह ! मुञ्च मुञ्च वैलक्ष्यम् । त्र्यक्षोऽपि देवस्त्वमिव केनापि दानवेन नारदरूपधारिणा हरिस्त्वामुपहसतीति साटोपकोपः कृतो मदधिक्षेपाय प्रतिघायात्र शिलादसूनुम् ।

( ततः प्रविशति नन्दिनानुगम्यमानो महेशः )

**महेशः**—( सानुतापम् )—

अविमृश्यकारितेयं क्रूरा कालोरगी हहा ! कापि ।
यद्दष्टमनिशमन्तः सशल्यमिव तप्यते हृदयम् ॥ ८ ॥

अयि नन्दिन् ! कथय कथय त्वदुदीरितदुरुदाहरणकन्दलितकोपः कथं वभूव, किमाह कृष्णः ।

**नन्दी**—( सप्रश्रयम् ) अयि चतुर्दशजगन्नायक ! किमेवमनुतप्यते सर्वज्ञः । कृष्णो निश्चितदुर्दैत्यदुर्विलसितो देवदेवसम्बोधनाय प्रागेव मां कृतस्मितः प्रजिघाय ।

**महेशः**—( सौत्सुक्यम् ) अयि नन्दिन् ! कदा मे कृष्णमेघसन्दर्शनेन मनोमयूरः परिमुक्तपरितापो भविष्यति ।

**नन्दी**—( सस्मितम् ) विमना देवो न जानीते । ननु वयमागता एव विष्णुलोकम् । किन्न पश्यति देवः पुरतोऽभ्युत्थितौ विरिञ्चिनारायणौ सनारदौ ?

**महेशः**—( सहर्षं, सोत्कण्ठमुपसृत्य, सपरिहासम् ) कृष्ण ! कृष्ण ! आवयोः समरद्रष्टा स्रष्टाप्ययमुपेत एव । तदेहि युध्यते ।

( इति समालिङ्गति )

**कृष्णः**—( सप्रश्रयम् ) अयि, देवदेव ! किन्नु प्रश्रयेण मम भक्तिमन्तरयसि ?

( इति प्रणमति )

**महेशः**—भगवन् पितामह ! एष त्वां महेशोऽभिवादयते ।

( पितामहः सलज्जं तूष्णीमास्ते )

**नारदः**—अलङ्क्रियन्ताम् आसनानीमानि भवद्भिः ।

**महेशः**—उपविशतु पुरो भगवान् विरिञ्चिः ।

**विरिञ्चिः**—( सनिःश्वासं, सप्रश्रयम् ) अयि देवदेव ! दानवाधमविप्रलब्धो नाहमेवंविधमादरमर्हामि ।

**महेशः**—अयि पितामह ! समान एवायमावयोरपकर्षस्तदुपविश्यताम् ।

( सर्वे यथायथमुपविशन्ति )

**महेशः**—( सस्मितम् ) अयि पितामह ! कथं पुनर्भवान् दानवाधमेन विप्रलब्धः ?

**विरिञ्चिः**—( सवैलक्ष्यम् ) अयि जगन्नाथ ! किं कथयामि ! केनापि वाष्पाम्बुपूरकारिणा नारदरूपधारिणा साक्रन्दमुक्तोऽस्मि । अधिक्षिप्तोऽस्मि केशवेनाहं त्वत्पितुर्वरदानेन दृप्तास्त्रिपुरासुराः परिभवन्ति भुवनत्रयम् । तत्तेनैव सह तान् उन्मूलयामि । ततोऽहं क्रुद्धो विष्णुलोकं समागतवान् । ( निःश्वस्य ) किमप्यनुचितमारब्धवान् । रक्षितोऽस्मि सर्वज्ञेन क्षमिणां वरेण दामोदरेण ।

**महेशः**—( सस्मितम् ) अहमप्यपरनारदेन गत्वा बोधितोऽस्मि—'किन्तेन मे स्थाणुनेति त्वां हरिरुपहसति' । ततोऽहं केशवान्तिकमागतेन नन्दिना गत्वा सम्बोधितोऽस्मि । शमितक्रोधोऽत्र समायातोऽस्मि ।

**कृष्णः**—( सपरिहासम् ) अहो ! कलिप्रियस्य कलहावलोकनकारणेन काव्यव्यूहकारिता ।

**नारदः**—( सक्रोधमिव, आकाशे लक्ष्यं बद्ध्वा ) साधु दानवाः ! साधु ! पुनः पुनर्विडम्बयत तातं कमलासनम् । दास्यति वरान् युष्मभ्यम् ।

**विरिञ्चिः**—अयि नारद ! किमविज्ञाय कुप्यसि ?

तपः संसेवन्ते दुरधिगमकामार्थमसुरा-
स्ततः प्रीतात्मानो ददति च वरं युक्तममराः ।
त्रिलोकीसंहारप्रणिहितधियः पापनिधयो
न बध्यन्ते दैत्या गदितुमिति कस्यास्ति रसना ॥ ९ ॥

सोपधिश्च वरो मत्तस्तैर्गृहीतो यथा किल त्रयोऽपि वयमेकशरविद्धा एव वध्याः ।

**नारदः**—अत एव ते योजनशतान्तरेण सञ्चरन्ते । तदित्थमवध्या एव ते संवृत्ताः । क्वैवंविधं धनुः, क्वैवंविधः शरः, क्वैवंविधो धन्वी, येनैकशरेण त्रयोऽपि विध्यन्ते ।

**कृष्णः**—( सक्रोधम् ) अयि नारद ! मैवम्—

स कोदण्डश्चण्डः कठिनकठिनः किन्न भविता
पृषत्कः सायामः किमु न भविता योजनशतम् ।
अविजेयो धन्वी किमु न भविता कोऽपि विषमो
विधौ क्रुद्धे मृत्युः किमु न निकटः सोऽपि भविता ॥ १० ॥

**नारदः**—( सहर्षम् ) अयि कृष्ण ! त्वयि क्रुद्धे क्रुद्धो विधिः, क्रुद्धः परमेश्वरः ।

नन्दी—( सहर्षम् ) ( साश्चर्यमूर्ध्वमवलोकयन् ) अहो ! कृष्णवचनमनुवर्तन्ते दुष्टदानवविनाशपिशुनानि दुर्निमित्तानि । पश्यत पश्यत —

पुच्छेऽग्रे च विशालभीमशिरसः सायामकायक्रमाः
पौरस्फोटितभाण्डनादजनितद्वैगुण्यशब्दोर्मयः ।
बद्धोत्फालपृथुस्फुलिङ्गपटलैराग्नेयदिग्विभ्रमं
बिभ्राणाः सकलासु दिक्षु निपतन्त्युल्काः पुरे खेचरे ॥ ११ ॥

नारदः—( तदनुसारेणोर्ध्वमवलोक्य, सहर्षम् ) सत्यं सत्यम्,

व्योम्नि प्रकटयन्त्येता उल्का दीप्तशिखाः पुरीम् ।
दीपिका इव कालस्य दुष्टदैत्यान्विचिन्वतः ॥ १२ ॥

( नेपथ्ये )

अयि चंचला दाणवा ! चिट्ठध, चिट्ठध । को एस तुम्हाणं अलिओप्पादभअसंखोहो । णूणं एदाओ पलाअन्तस्स पावअस्स करालाओ जालाओ णिवडिदाओ । मए खु णारअवेसेण महेसं वंचिअ वंचिदा महेन्दपमुहा लोअवाला । ( छाया ) [ अयि चञ्चला दानवाः ! तिष्ठत, तिष्ठत । क एष युष्माकं अलीकोत्पातभयसङ्क्षोभः । नूनमेताः पलायमानस्य पावकस्य कराला जाला निपतिताः । मया खलु नारदवेषेण महेशं वञ्चयित्वा वञ्चिता महेन्द्रप्रमुखा लोकपालाः । ] परिदेविदं खु ताणं पुरदो मए । "हा ताद कमलासण ! हा महेस ! हा केसव ! कह तुम्हेहिं तिउरासुरणिव्वासिदेहिं पाआलमूले वसिदव्वं । तुम्हेवि महेन्दपमुहा सव्वे पुरा तहिं गच्छध गच्छध कुणह परोप्परमुहावलोएण तहिं कालक्खेवं । तदो महेंदपमुहेहिं अमरेहिं अविआरिअ झत्ति य वक्कंतं । ता सइं झत्ति संभावेदु देओ सुज्जताओ अ जहिच्छं सुरिंदरायहाणिं । ( छाया ) [ परिदेवितं खलु तेषां पुरतो मया, हा तात कमलासन ! हा महेश ! हा केशव ! कथं युष्माभिः त्रिपुरासुरनिर्वासितैः पातालमूले वस्तव्यम् । यूयमपि महेन्द्रप्रमुखाः सर्वे सुरास्तत्र गच्छत, गच्छत, कुरुत परस्परमुखावलोकेन तत्र कालक्षेपम् । ततो महेन्द्रप्रमुखैरमरैरविचार्य झटित्येव अपक्रान्तम् । तत्सम्प्रति झटिति सम्भावयतु देवो यथेच्छं सुरेन्द्रराजधानीम् । ]

( पुनर्नेपथ्ये )

साधु विपरीत ! साधु ! शिरोमणिस्त्वमसि मद्भृत्यानाम् । सफलीकृतं भवता विपरीतेति नाम, यदसुराः स्वर्गसदः कृताः, पातालमूलं प्रापिता अमराः ।

**नारदः**—( सावेगं, सभयं च ) अयि ! श्रुतं भवद्भिः ?

**नन्दी**—किं श्रोतव्यम् ?

**नारदः**—पश्यत, पश्यत । विपरीतवचनसमाकर्णनानन्तरमेव,

हर्षोत्कर्षविशृङ्खलासुरचमूसान्द्रध्वजश्रेणिभिः
कुर्वन्नम्बरडम्बरं हयमहाहेषोर्मिवाचालितम् ।
तन्वन् दिग्वलयं नवाम्बुदमयं दानान्धदन्तावलै-
रेष प्रस्थित एव दानवपतिः पौरन्दरं पत्तनम् ॥१३॥

( सखेदं निःश्वस्य )

कोदण्डेऽजगवे कदा गुणलता टङ्कारमापत्स्यते
मोच्या हन्त कदा गदाऽथ भविता ब्राह्मं तदस्त्रं कदा ।
याता एव यतस्ततो दिविषदस्ते ते महेन्द्रादयो
धिग्धिग्वश्चिरजीवितं यदसुरैः स्वर्गो हहा ! गृह्यते ॥१४॥

**कृष्णः**—( सोत्साहम् ) अयि नारद ! किमेवमाकुलोऽसि ? स्वर्गनामसमाकर्णनेऽपि बधिरा एव दानवाः ।

( इति चिन्तां नाटयति )

**नन्दी**—( ऊर्ध्वमवलोकयन्, साश्चर्यं, स्वगतम् ) आः ! कोऽयमाकस्मिको महान्धकारः सहसा विजृम्भते । नूनमियं कृष्णप्रयुक्तेन्द्रजालमाया भविष्यति, यद्दैत्यवथिनीमेवोपसर्पति । ( प्रकाशम् ) आश्चर्यम्, आश्चर्यम् ।

अन्योऽन्यं घटनादुपात्तकलहाः क्षुभ्यन्त्यहो कुम्भिनो
जायन्ते स्वयमेव दन्तिदशनाघातस्य लक्ष्य हयाः ।
दूरे शक्रपुरी निजालयपरावर्त्तोऽप्यभूद्दुर्लभः
सद्यः पश्यत पश्यतासुरबले ध्वान्तैः कृतान्तायितम् ॥१५॥

**नारदः**—( सहर्षम् ) अयि दानवारे ! नमस्ते, नमस्ते । नामापि न भविष्यति त्वयि क्रुद्धे दानवानाम् ।

नैतस्य द्विरदा मदाकुलघटा नोदग्रवेगा हया
योद्धारो न निशातशस्त्रनिधयो नोग्रप्रमाथा रथाः ।
नायं वल्गति नर्द्दति प्रहरति प्रस्फोटयत्युत्कटो
मोहेनैव निहन्ति दानवकुलं वीरोऽन्धकारोऽद्भुतः ॥१६॥

( नेपथ्ये )

अयि दानववीराः ! किमेवमाकुलीभवन्ति भवन्तः ? । नूनमयं पातालोपगतैरमरैरिह प्रहितोऽन्धकारस्तत्केऽपि दैत्यभटाः पातालमुपेत्य देवानुन्मूलयन्तु, रुन्धन्तु चान्धकारम् । अयं चान्धकारः कौमुदीमायया मया नियम्यते ।

नारदः—( सावेगम् ) अयि तात ! अयि देवदेव ! अयि कृष्ण ! भवन्तस्तावदमरावतीमशून्यां कुरुत, यावदहं भवत्प्रसादादविहतगतिर्विज्ञापितमायाप्रपञ्चान् देवान् दिवमानयामि ।

ब्रह्माद्याः—साधु, साधु ।

( इति निष्क्रान्ताः सर्वे )

॥ इति महामात्यवत्सराजविरचिते त्रिपुरदाहाभिधाने डिमे द्वितीयोऽङ्कः ॥



## अथ तृतीयोऽङ्कः

( ततः प्रविशति विशदाशयः )

**विशदाशयः**—( पुरोऽवलोक्य ) कथमयं स्फुटाक्षर इवावलोक्यते ? निपुणं निरूप्य मयाऽप्युदासीन एषः । किं पुनरसौ ससंरम्भ इव द्रुतपदैर्विभाव्यते ?

( ततः प्रविशति यथानिर्दिष्टः स्फुटाक्षरः )

**स्फुटाक्षरः**—कधं अय्यो विसदासओ । ता पणमामि णं । ( सप्रश्रयमुपसृत्य ) अय्य विसदासय ! सव्वसंदेहविसोवसमकारणे बह्मणोत्ति तुमं पणमामि ण उण रायसविवत्तणाणुरोहेण । ( छाया ) [कथमार्यो विशदाशयः । तत्प्रणमामि ननु ! आर्य विशदाशय ! सर्वसन्देहविषोपशमकारणं ब्राह्मण इति त्वां प्रणमामि । न पुनः राजसचिवत्वानुरोधेन । ]

( इति प्रणमति )

**विशदाशयः**—( सस्मितम् ) स्फुटाक्षर ! आयुष्मान् भव । किं पुनर्भवान् संरब्ध इव विभाव्यते ?

**स्फुटाक्षरः**—अय्य विसदासय ! को संरम्भो ? ( छाया ) [ आर्य विशदाशय ! कः संरम्भः ? ]

**धुत्तेहिं मोहिदाणं अग्घन्ति ण सच्चवयणरयणाओ ।**
**अणहिण्णाण पहूणं अलियालावेसु रत्ताण ।।१।।**

( छाया ) [धूर्तैः मोहितानां नार्हन्ति सत्यवचनरत्नानि ।
अनभिज्ञानां प्रभूणामलीकालापेषु रक्तानाम् ।।१।। ]

अहं खु दाणवनाहेण सव्वतावणेण पाआलमूलमुवगदाणं देवाणं वुत्तन्तं णिरूविदं पेसिदोम्हि । तदो मए आगदुअ विण्णत्तं जहा किर नारयमहेसिणा विवरीददाणवविरइदमायापवंचंणिवेदिअ णिवट्टिदा सव्वेवि देवाकअन्तभावमुवगदव्व कुद्धा तुम्हाणं ( छाया ) [ अहं खलु दानवनाथेन सर्वतापनेन पातालमूलमुपगतानां देवानां वृत्तान्तं निरूपयितुं प्रेषितोऽस्मि । ततो मया उपगत्य विज्ञातं यथा किल नारदमहेशिना विपरीतदानवविरचितमायाप्रपञ्चं निवेद्य निर्वातिता सर्वेऽपि देवाः कृतान्तभावमुपगताः क्रुद्धा युष्माकम् ।]

पुराइं अहिद्दवन्ति । ता किज्जदु पडिविहाणं । तदो पहुणा सव्वतावणेण गव्वुम्हाविलीनहिदाहिदणाणेण साहिक्खेवं अवहत्थिदोम्हि । ता उव्विग्गो जामि णिअभवणं। अय्यं पि अज्ज उव्विग्गं पिव पेक्खामि । ता किं नेदं ? (छाया) [पुराण्यभिद्रवन्ति । तत्क्रियतां प्रतिविधानम्। ततः प्रभुणा सर्वतापनेन गर्वोष्मविलीनहिताहितज्ञानेन साधिक्षेपमवहस्तितोऽस्मि । तदुद्विग्नो यामि निजभवनम् । आर्यमपि उद्विग्नमिव प्रेक्षे । तत्किंन्विदम् ? ]

**विशदाशयः**—( सखेदं, निःश्वस्य ) अयि स्फुटाक्षर ! परवानस्मि गुरोर्भगवतो भृगुनन्दनस्य । किं करोमि ? नाहमन्यथैवंविधं कुलविरुद्धं विद्याविरुद्धं नामविरुद्धं च मायामयं पुण्यमपुण्यं कर्म कुर्याम् ।

**स्फुटाक्षरः**—( ससम्भ्रमम् ) किं उण एआरिसं अच्चाहिदं अय्येण ववसिदं येण एवं अणुतप्पदि अय्यो । ( छाया ) [ किं पुनः एतादृशमत्याहितमार्येण व्यवसितम्, येन एवं अनुतप्यते आर्यः । ]

**विशदाशयः**—अयि स्फुटाक्षर ! एवमन्यथार्थितोऽस्मि सर्वतापनेन । यथा किल भगवन् विशदाशय ! दुराधर्षा मद्वर्ग्याणां भर्गगोविन्दविरिञ्चिममधिष्ठिता पौरन्दरी पुरी । तत्तत्र भवता यत्किमपि मायेन्द्रजालमासूत्र्यतां, येन ते त्रिदशानां समूलनाशमाशङ्क्य निराशाः स्वयमेव तां परिहरन्ति ।

**स्फुटाक्षरः**—तदा किं कअ अय्येण ? ( छाया ) [ तदा किं कृतमार्येण ? ]

**विशदाशयः**—कृतमपि विपरीतफलमेव तेषु नादृशेषु मायेन्द्रजालादिकम् !

**स्फुटाक्षरः**—( सभयम् ) भअवंत । ताणं कए किंपि कीरदु अवरं सन्तिकम्मादिअं । ( छाया ) [ भगवन् तेषां कृते किमपि करोतु अपरं शान्तिकर्मादिकम् । ]

**विशदाशयः**—( सोद्वेगम् ) अयि स्फुटाक्षर ! किमलीककर्मक्लेशेन ।

**उपद्रवाः क्षुद्रसुरासुराणां**
**शक्यन्त एव प्रतिकर्त्तुमन्ये ।**
**क्रुद्धेऽन्धकध्वंसिनि शूलपाणौ**
**कः प्रक्रमः शान्तिकपौष्टिकानाम् ॥२॥**

जानामि चैकं शान्तिकम् ।

व्यसनज्वलनेऽमुष्मिन्नविनयपवनप्रसारणोत्फुल्ले ।
हरचरणयुगलसेवा सुरसिन्धुः सापरं शरणम् ॥३॥

**स्फुटाक्षरः**—ण उण एदं अणुसरिस्सदि अलियगव्वुत्तासिदो सव्वताओ। (छाया) [न पुनः एतदनुसरिष्यति अलीकगर्वोत्त्रासितः सर्वतापः । ]

**विशदाशयः**—अयि स्फुटाक्षर ! दानवगुरुणा अहमस्य साचिव्ये पौरोहित्ये च नियुक्तोऽस्मि । तन्नेह मे समुचितमौदास्यम् । त्वमप्यस्य क्रमायातो हितः । तदास्तामपमानक्लेशः । एहि, यथासम्भवमस्य हितमारभ्यते ।

(इत्युभौ परिक्रामतः)

**स्फुटाक्षरः**—पुरोऽवलोक्य परवसोम्हि अय्यस्स । विहावेदु अय्यो एस दाणवणाहो गोउरपरिसरे हत्थिपीढसमारूढो चिट्ठदि । एसावि दाणववीरवाहिणी सुग्गहणा सव्वपाआरपरिसरे समन्तदो विहावीअदि । (छाया) [परवशोऽस्मि आर्यस्य । विभावयतु आर्यः । एष दानवनाथो गोपुरपरिसरे हस्तिपीठसमारूढः तिष्ठति । एषापि दानववीरवाहिनी सुग्रहणा सर्वप्राकारपरिसरे समन्ततो विभाव्यते । ]

**विशदाशयः**—(पुरोऽवलोक्य), (सावज्ञं विहस्य)—अयि स्फुटाक्षर !

स्फुरदुरधनुर्वल्लिश्यामं कठोरशरोत्करं
विषमसमरक्रीडासिंहीविजृम्भितभीषणम् ।
दितिसुतभुजारण्यं तावच्चकास्तु निरत्ययं
हरहुतभुजक्रोधज्वाला न यावदिहापतेत् ॥४॥

**स्फुटाक्षरः**—अय्य विसदासय ! पच्चासन्नो दाणवणाहो । उअसप्पीअदु दाव । (छाया) [आर्य विशदाशय ! प्रत्यासन्नो दानवनाथः । उपसर्प्यतां तावत् । ]

[ ततः प्रविशति यथानिर्दिष्टः सर्वतापः ]

**सर्वतापः**—कथमायात एव विशदाशयः ? आर्य ! अभिवादयेऽत्रभवन्तम् ।

**विशदाशयः**—विरतविग्रहः परमानन्दभाजनं भूयाद्दानवेश्वरः ।

**सर्वतापः**—आसनमलङ्करोतु भवान् ।

**विशदाशयः**—( परिजनोपनीतमासनमुपविश्य, स्वगतं सानुतापम् ) आः !
केयं मदीयमुखमुखराद्दुरुदाहृतिः कालोरगी विनिर्गता । भवत्वत्रिदितैव यातु कुतोऽपीयम् । ( प्रकाशम् ) अयि दानवेश ! स्फुटाक्षरोऽयं स्फुटाक्षरः । परमहितो दानवेशस्य प्रसादमेवार्हति ।

**सर्वतापः**—( सहर्षं, विहस्य ) क्रोधनः स्फुटाक्षरः । किं क्रियते ?

( स्फुटाक्षरः प्रणम्योपविशति )

**सर्वतापः**—( सोत्कण्ठम् ) आर्य विशदाशय ! अप्यनुष्ठितं तदार्येण ।

**विशदाशयः**—अनादिष्टमप्यभीष्टं देवस्य क्रियते । किं पुनरादिष्टम् ?

**सर्वतापः**—( सौत्सुक्यम् ) कथयतु, कथयतु आर्यः । किं कृतम् ?

**विशदाशयः**—माहेन्द्रो त्वगनेकलोचनपदैः कीर्णा पताका कृता
पाशेनाम्बुपतेर्दृढं निगडिता कार्तान्तदण्डाग्रतः ।
कौमारस्य शिखण्डिनः कृतरुचिर्बर्हेण गुप्तात्मना
न्यस्ता कल्पमहीरुहे तव यशःस्तोत्रं मया कुर्वता ।।५।।

प्रस्तावितश्च तत इतो दृश्यविपुलज्वलजलधिकोलाहलो मायामयः । ततस्तैस्तत्र स्थितैर्देवैर्विपरीतनिर्मितमायावृत्तान्तप्रसृतितः सुज्ञैर्महानुपहासः कृतः । शम्भुना च कृतसंरम्भेण त्वदीयनगरोद्योगाय नियुक्तः क्रौञ्चदारणः ।

**सर्वतापः**—( सक्रोधम् ) अयि विशदाशय ! कुलाचार इति कारितेयं मया माया साक्षादेव पितामहादीनाम् ।

उत्कृत्य तानुन्मदलोकपालान्
तत्कृत्तिभिः केतनवैजयन्तीः ।
निर्माय भूयो बलसंयुतोऽहं
यास्यामि वज्रायुधराजधानीम् ।।६।।

**विशदाशयः**—( स्वगतं, सविषादम् ) अहो ! दर्पान्धिना दानवाधमस्य निगूढवैशसं च । अत एव नैनं भृगुनन्दनोऽपि प्रत्यवेक्षते ।

[ नेपथ्ये, सगर्वमुच्चैःकारम् ]

ज्वालामालाभिरग्नेर्लयसमयमरुत्प्रणोल्लासिताभि-
र्भानोस्तैर्भानुसार्थैः क्वथितमरुणितं पत्तनं लौहमेतत् ।
रे रे ! गीर्वाणवीरा इषुधिशरशिरोबाणटङ्कैरयत्नात्
सद्यो बन्धूकपुष्पावचयरचनया खण्डशः वाटयध्वम् ।।७।।

**सर्वतापः**—( **श्रुत्वा, सक्रोधम्** ) आः, कथमयं वराकः सूर्यः सूर्यतापपुरं पावकसहायः प्लोषति । तिष्ठ रे ! तिष्ठ !

**अन्यः स सूर्यः ( समरः ) क्षणमात्रमेव**
**यस्मिन्द्विषद्य विपदं पुनरभ्युदेषि ।**
**ध्वान्तापनोदमधिकृत्य निजप्रभाभि-**
**रद्यैव लोकमपसूर्यमहं करिष्ये ॥८॥**

( **इत्युत्थातुमीहते** )

**विशदाशयः**—अयि दैत्यराज ! महावीर ! तिष्ठ, तिष्ठ ! पावकसहायस्य लब्धावकाशस्य सूर्यस्य मिथ्यागर्वोक्तिरियम् । कोऽयमेतावानिह संरम्भः ।

( **सर्वतापनस्तथैव तिष्ठति** )

**विशदाशयः**—( **स्वगतं, साशङ्कम्** ) ताप्यत एव तावत्सूर्यतापः । चन्द्रतापः कथमास्त इति न ज्ञायते । ( **प्रकाशम्** ) अयि स्फुटाक्षर ! गच्छ, क्रियतामप्रमत्तश्चन्द्रतापः ।

**स्फुटाक्षरः**—( **सप्रश्रयम्** ) यथाऽऽज्ञापयति आर्यः ।

( **इति निष्क्रान्तः** )

( **पुनर्नेपथ्ये सकरुणम्** )

**ब्रध्ने वह्नौ विकिरति रुषा रश्मिमालाः शिखाली-**
**र्लौहेऽमुष्मिन्नसुरनगरे भ्राष्ट्रवद्दह्यमाने ।**
**लावा दावानल इव हहा निर्गमोद्बद्धझम्पा**
**भूयो भूयः स्फुरदरतयो दैत्यवीराः पतन्ति ॥९॥**

**सर्वतापः**—( **सक्रोधं, ससंरम्भम्** ) आः ! कथं दह्यत एव मे भ्रातुः सूर्यतापस्य तादृशं दुर्मदं दैत्यबलम् । तदलमनेन मृषा भुजभारधारणायासेन ।

( **इति संरम्भं नाटयति** )

**विशदाशयः**—अयि दैत्यराज ! न युज्यते निकटतो भवितुम् । दूरस्थानां भवतां दूरतो मृत्युः ।

( **सर्वतापनस्तथैव तिष्ठति** )

**विशदाशयः**—( **सोल्लासम्** ) अयि दैत्यनाथ ! पश्य ! पश्य प्लोषप्रकारसमासादितसिन्दूरपूराडम्बरं त्वद्भ्रातुरिदं लौहं पुरं वियदङ्गणमनुधावति ।

सर्वतापः —( विभाव्य, सोल्लासम् )—

सूर्यास्पदं किमु जिघृक्षुरयं दिदृक्षुः
किं वा पराणि भुवनान्युपरिस्थितानि ।
आकाशकोटिमधिरोहति दैत्यनाथः
पाथोधिमुत्थित इवौर्वशिखी विशोष्य ॥१०॥

( पुनर्नेपथ्ये )

क्रोधाध्मातदिनाधिनाथकिरणैः स्फारीकृताभिर्बलाद्
एतल्लौहपुरं तथा हुतभुजो ज्वालाभिरुत्ताप्यते ।
पौराणां ज्वलतां यथा चटचटाकोलाहलोन्मिश्रितो
दुर्गन्धोऽयमुदञ्चति श्रुतिपथघ्राणेन्द्रियद्रोहकृत् ॥११॥

सर्वतापः—( श्रुत्वा, सक्रोधम् ) अयि ! लब्धावकाशाः खेचरा इमे प्रगल्भन्ते । सावज्ञं विहस्य अयि मूर्खाः ! क एष विषादावसरे प्रहर्षः ।

तपनदहनदाहैः खादिराङ्गाररूपं
पुरमिदमभवद्यन्मृत्युशङ्काविमुक्तम् ।
इदमभिमतमासीद्युद्धखेदं विनैव
ज्वलयतु तदिदानीं स्पर्शमात्रेण शत्रून् ॥१२॥

विशदाशयः —( सहर्षम् ) अये दानवनाथ ! दिष्ट्या वर्द्धसे । विभावय तावदूर्ध्वम् ।

दधत्कृष्णां छायां स्खलदरुणकान्तिव्यतिकरं
स्फुरद्भिश्छाङ्गारैर्मुखरितककुप्चक्रमुरभिः ।
लसद्धूमस्तोमैर्जनितयमुनासङ्गसुभगे-
वियद्गङ्गापूरे पुरमिदमहो ! मज्जतितराम् ॥१३॥

तदस्य प्रशान्त इव दाहपरिभवः । दीर्घायुषोऽमी दानवाः संवृत्ताः ।

सर्वतापः —( सहर्षम् ) अहो ! भ्रातुः सूर्यतापस्य शौर्यं यदिमां दाहविपदं विषह्य मन्दाकिनीजलावगाहेन लौहमयं नगरमनपायतां नीतम् । तदिदानीं चन्द्रतापस्यापायशङ्का परं मां बाधते ।

( नेपथ्ये )

यस्मिन्नासीत्प्रकम्पः कुसुमशरकृतो यत्र मुग्धाङ्गनानां
अङ्गे सङ्कोचभङ्गिः सुरतपरिकरे यत्र सीत्कारशब्दः ।
तौषारं वर्षमुग्रं किरति हिमकरे शैलराजे च रोषात्
तस्मिंस्तास्ताः सचेष्टाः कथमहह ! पुरे चान्द्रतापेऽप्यभूवन् ॥१४॥

**सर्वतापः**—( श्रुत्वा, सक्रोधम् ) अयि पापाः ! किमेवं भवद्भिरुद्घुष्यते । तथा हि—

सोऽयं पतङ्गाद्दहनस्य भङ्गो
दावानलादेष समुद्रशोषः ।
गरुत्मतो राजिलतः क्षयोऽयं
यच्चन्द्र..: सीदति चन्द्रतापः ॥ १५॥

( पुनर्नेपथ्ये सगर्वम् )

निवसति वडवाग्निर्यत्र सायान्नधामा
विहरति च महोष्मा यत्र हालाहलीयः ।
मयि शशिनि सरोषे मद्गुरोस्तस्य वर्द्धेः
कुरु शरणगतस्त्वं चन्द्रतापात्मरक्षाम् ॥ १६॥

**सर्वतापः**—विशदाशय ! मम ज्ञातेर्विधुन्तुदस्य भक्ष्योऽयं तदेनं भक्षयतो मम न दोषोऽस्ति । कवलाम्येनम् ।

**विशदाशयः**—( सप्रश्रयम् ) अयि दानवेश ! भवानेनं कवलयतु । भवन्निदेशेन राहुरेव वा बाढमपुनर्भवाय कवलयतु । किन्तु चन्द्रतापसमीपे प्रहितः प्रतीक्ष्यतां स्फुटाक्षरः ।

[ ततः प्रविशति स्फुटाक्षरः ]

**स्फुटाक्षरः**—( सखेदम् ) अहह ! विहिविवरीददाए वैभवंपि विवरीदफलं भोदि । तंय्येव चंदतावनअरस्स रूप्पमयं पाआरं रूप्पमआइं सोहाइं एदस्सि तुसारअरसमरम्मि अइतुसारदाए अणत्थहलं संवुत्तं । ( छाया ) [ अहह, विधिविपरीततया वैभवमपि विपरीतफलं भवति । तदेव चन्द्रतापनगरस्य रूप्यमयः प्राकारो रूप्यमयानि सौधानि एतस्मिन् तुषारकरसमरे तुषारतया अनर्थफलं संवृत्तम् । ]

**सर्वतापः**—( स्फुटाक्षरं दृष्ट्वा, ससम्भ्रमम् ) अयि दौवारिकाः ! प्रेतः कोऽप्ययं मामभ्युपैति ।

**स्फुटाक्षरः**—( सावेगम् ) अयि णाह ! णहु णहु अहं पेदो भूओ वेआलो वा । अहं फुडक्खरो देवस्स चरो चंदताववुत्तन्तं णिरूविदं गदोम्हि । तं उण मह अवत्थाए य्येव विन्नत्तं ए सिसिरेण समरो दिट्ठो । ण कआवि मए एआरिसो तुसारसंभवो अणुभूदो । ता किंपि परित्ताणं करेदु दाणवणाहो । ( छाया )

[ अयि नाथ ! न खलु, न खलु, अहं प्रेतो भूतो वेतालो वा। अहं स्फुटाक्षरो देवस्य चरश्चन्द्रतापवृत्तान्तं निरूपयितुं गतोऽस्मि। तत् पुनः मम अवस्थयैव विज्ञप्तम् ·· शिशिरेण समरो दृष्टः। न कदापि मया एतादृशस्तुषारसम्भवोऽनुभूतः। तत्किमपि परित्राणं करोतु दानवनाथः। ]

सर्वतापः—( सक्रोधम् ) एष निर्दहामि हिमदीधितिं हिमाचलं च।

( इति संरम्भं नाटयति )

विशदाशयः—( सप्रश्रयम् ) अयि दानवेश्वर ! कृतं कृतं संरम्भेण।

क्षयी हिमांशुर्हिमपर्वतोऽपि
त्रिविष्टपाधीश्वरलूनपक्षः।
युद्धाय सन्नह्यसि यत्तयोस्त्वं
मन्दाक्षभारः कथमेष सह्यः? ॥१७॥

सर्वतापः—तदिहस्थ एव दहनास्त्रं प्रयुञ्जे।

( इति तथा करोति )

[ नेपथ्ये ]

प्रशमितहिमखेदं पावकास्त्रेण येन
क्षणमिव पुरमासीत्सुस्थितं चान्द्रतापम्।
अहह ! निबिडदाहद्रावितद्वारसौधं
प्रबलरजतपङ्कैस्तद्दहत्याशु दैत्यान् ॥१८॥

सर्वतापः—( श्रुत्वा, सक्रोधम् ) उपसंहराम्येष आग्नेयास्त्रम्।

( इति तथा करोति )

विशदाशयः—अहह ! सुमहानयं सङ्कटः। आग्नेयास्त्रप्रयोगे वियोगेन शिशिराभिभवः। आग्नेयास्त्रं च राजतं विलालयति। तद्गच्छ, स्फुटाक्षर ! ब्रूहि चन्द्रतापं राजतपुरमनर्थनिमित्तं परिहृत्य बहिः स्थीयतां वहिर्युध्यताम्।

स्फुटाक्षरः—यदाऽऽदिशति आर्यः।

( इति निष्क्रामति )

विशदाशयः—( वामाक्षिस्पन्दनं सूचयित्वा ) अहह ! किमेतदाचण्टे स्पन्दमानं मे वामं लोचनम्। अस्तु सर्वाभ्युदयभाजनं सर्वतापः। अस्तु चाप्रतिहततेजा दैत्यगुरुः।

( नेपथ्ये )

तावद्वस्त्रिपुरासुराः ! प्रसृमरं त्रैलोक्यजिद्वैभवं
स्यूतः पङ्कजसम्भवेन निबिडस्तावद्वरः कङ्कटः ।
तत्कन्दर्पमहेन्धनं त्रिभुवनप्लोषप्रगल्भं क्षये
यावन्नोद्घटते मनागपि रुषा त्र्यक्षस्य भालेक्षणम् ॥१९॥

**विशदाशयः** —( नभोऽवलोक्य ससम्भ्रमम् ) कथमयं कुमारो नन्दिसनाथविपुलबलपरीवारः समापतति ! तथा हि—

तडिद्वद्भिर्मेघैरिव विलसदुत्तालरसनै-
र्विशालैर्वेतालैर्वियति पृथुकोलाहलमयः ।
मुदा नाकाशब्दैर्गुरुसुभटनादेऽप्यपिहितै-
र्मयूरः कौमारो मुखरयति दिक्चक्रमनिशम् ॥२०॥

अयि दानवेश ! एष कुमारस्त्वां सङ्ग्रामयितुमभ्युपैति । गृहाण कार्मुकम् ।

[ततः प्रविशति यथानिर्दिष्टः कुमारः ]

**सर्वतापः** —( सावज्ञम् ) आः ! बालको विशाखः सर्वतापं योधयिष्यति ।

( आकाशे लक्ष्यं बद्ध्वा )

धन्यो धन्वा पिनाकः कटुपटुगतयो हेतयः शूलमुख्या-
श्चण्डास्ते बाहुदण्डाः प्रवणशिखिशिखाभीषणं भालचक्षुः ।
बालं दुर्लालनीयं किमिति पशुपते ! प्राहिणोः सङ्गराथं
( सोपहासम् )
वीराणां युद्धकेलिव्यतिकरमरणे कः क्रमोऽतिक्रमो वा ॥२१॥

**कुमारः** —( सोपहासम् ) अये ! तातेन सार्द्धं युधश्रद्धालुर्दानवाधमः । अयि वीर !

किं त्वां भस्मीकरोमि स्मरमिव सहसा किं नु ते बाहुदण्ड-
स्तम्भं जम्भस्य शत्रोरिव युधि विबुधे क्ष्वेडवर्तिं गिलामि ।
छत्राभं शक्तिदण्डग्रथितमथ करोम्यन्धकस्येव तेऽङ्गं,
कीदृक्ते तात ! युद्धं सुखयति दनुजश्रेष्ठ ! तादृग्विदध्याम् ॥२२॥

**सर्वतापः** —अयि कुमार ! बालकोऽसि । त्वामनुकम्पे । यदि सत्यं सङ्गरे निष्कम्पोऽसि तदाविष्कुरु कार्मुककर्मठत्वम् ।

त्वां न क्षिणोमि शिखिवाहनमन्दशक्ति
युद्धाम्बुधौ सुगहने न हि तारकोऽहम् ।
तस्मिंस्तदा शरवणे जननिस्तवासीद्
अस्मिन्युधः शरवणे मरणं भजस्व ॥२३॥

कुमारः—( ससम्भ्रमम् )—

शक्तिर्गतैव तव दानव ! शक्तियोगः
शक्त्या भविष्यति मया हृदि मुक्तया ते ।
त्वद्विग्रहग्रहिलता न भविष्यतीयं
बाणैर्ममाशु भवितासि परासुरेव ॥२४॥

( इति बाणवर्षं नाटयति )

सर्वतापः—( सावज्ञं, विहस्य ) अयि विशाख ! सुखयति मां कुतूहलिनं तव बालस्य धार्ष्ट्र्यम्, तन्नाहं त्वयि धनुः सज्जं करिष्ये । खेलतु भवान् यथाकामं मम सैन्ये ।

नन्दी—( अपवार्य ) कुमार ! विरिञ्चिवरदानेन केवला अमरा एव त्रिपुरासुरास्तदलमनेन सार्द्धं मुधा युद्धायासेन । बलमेवास्य विदलय बाणवर्षैः ।

( कुमारस्तथा करोति )

नन्दी—( सहर्ष, सोल्लासम् ) विजयतां कुमारः ! इतस्त्वया बाणगणैर्वेताळैश्च विदलिता एव दानवाः ।

कुमारः—अयि शिलादसूनो ! कथं य एव दानवा निहताः, त एव प्रतिजीविता उदायुधाः समायान्ति ? तत्किमेतत् ?

विशदाशयः—रे रे दैत्यवीराः ! - मरोपरतान् वीरान् अमृतकुण्डे मज्जयत, यथा प्रत्युज्जीविताः समधिकबलं युध्यन्ते ।

( नेपथ्ये )

क्रियत एवैतत् । किन्न पश्यत्यमात्यस्तथैव बलमक्षयम् ।

कुमारः—( सोल्लासम् ) अयि सर्वताप !

सततममृतकुण्डं वर्द्धतां वर्द्धतां ते
समरनिहतवीरा येन जीवन्ति भूयः ।
विरतमरणशङ्कैस्त्वद्भटैर्युध्यमानै-
र्भवति मम यतोऽयं युद्धकामः कृतार्थः ॥२५॥

नन्दी—( अपवार्य ) अयि कुमार ! आग्नेयबाणलूनैः स्वर्णप्राकारखण्डैः पूरयामृतकुण्डम् । नान्यथा क्षीयन्ते दानवाक्षौहिण्यः ।

( कुमारस्तथा करोति )

[ नेपथ्ये ]

स्वर्णप्राकारखण्डैः शिखिविशिखशिखाखण्ड्यमानैः सुतप्तैः
पूर्णं पीयूषकुण्डं छमिति मुखरितैः पीतपीयूषपूरैः ।
कष्टं कष्टं विनष्टैः कथमिव समरे दानवैर्जीवितव्यं
तत्पूर्वोऽयं प्रविष्टः प्रसभमपचयः सर्वतापस्य सैन्ये ॥२६॥

विशदाशयः–( सामर्षम् ) अयि कातराः ! केयमाकुलता ? नन्दति भृगुनन्दने क्व दानवानामपचयः ? अयि दानवेश सर्वताप ! चिन्तय भार्गवं भगवन्तम् । अहमपि चिन्तयामि ।

( उभौ चिन्तां नाटयतः )

[ ततः प्रविशति भार्गवः ]

भार्गवः–( सगर्वम् )–

अशोष्योऽहमपेयोऽहमहार्योऽहमनश्वरः ।
मायामृते च दैत्यानां मृत्योरभिभवः कुतः ॥२७॥

तां प्रतिजीविता दानवाः क्षपयन्तु देववाहिनीं, रक्षणीयः परमयं मम भ्राता कुमारः । अहं हि भगवता भर्गेण पुत्रः परिकल्पितोऽस्मि ।

नन्दी–( सखेदम् ) अये ! भार्गवः सम्प्राप्तः । अनेन हि देवदेवादेव मृतसञ्जीवनी विद्या समासादिता । तदिदानीमायासैकफलो दनुजैः सह समरसम्मर्दः । न च मे महेशनिदेशमन्तरेण युज्यते समरादपावर्तयितुं कुमारः ।

( ततः प्रविशति नारदः )

नारदः–( सहर्षम् ) अहो जगत्प्रभोः शम्भोर्मयि परिहासो यदहम् "अयि कलिप्रिय ! वारय कुमारसर्वतापयोः समरसम्मर्दम्" इति विहस्य प्रेषितोऽस्मि । ममापि न तादृगिदानीं कलहावलोकनकुतूहलित्वम् । यदहं लोहपुरसमरसम्मर्दसंदर्शनेनार्द्धतृप्तो राजतपुरकदनावलोकनेन सुतरां सुतृप्तः संवृत्तः । अहह ! किमुच्यते लोहपुरप्लोषणेन पवनपावकयोः शौर्यं हिमांशोर्हिमवतश्च नीहारभारेण राजतपुरपूरणम् । उभयत्रापि निर्गत्वरासुरसार्थबन्धने पाशपाणेर्लघुहस्तता । तावतामपि जीवितापहरणे किं वर्णयामि समरसामर्थ्यम् । तदिदानीं त्वरितमपवर्तयामि समरतः कार्त्तिकेयम् ।

( पुरोऽवलोक्य ), ( सहर्षाश्चर्यम् ) कथमयं कार्त्तिकेयो विष्णुपदमभिवर्षति शरासारम् । अहह—

नायं मुखेनैव पितुर्महेगात्
पराक्रमेणाप्यधिकः षडास्यः ।
यः पूज्यते विस्मृतशम्भुशौर्यै-
र्मन्दारदामप्रकरेण सिद्धैः ॥२८॥

तदुपसृत्य वारयामि । ( उपसृत्य ) अयि कुमार ! अयि शिलादसूनो ! समादिशति वो भगवान्भर्गः । अयं हि भार्गवो मया पुत्रत्वेन सम्भावितः । तत्किमेतत्परिगृहीतं सर्वतापं दानवमभितापयन्मां……हेपयसि ।

नन्दी —( स्वगतम् ) अस्मदभिमतमेवोपक्रान्तमेतेन । ( प्रकाशम् ) यथाऽऽदिशति देवदेवः । कार्तिकेयं प्रति आयुष्मन्ननुल्लङ्घ्यः पितृनिदेशस्तदास्तां तावद्युद्धम् ।

कुमारः —( स्वगतं, सखेदम ) अहो मे मन्दभाग्यता, यदेतस्य चिरादासादितस्याहवमहोत्सवस्य प्रत्यूहः समापतितः । ( प्रकाशं ) (निःश्वस्य) यथाऽऽदिशन्ति तातपादाः ।

( इति सपरिवारा निष्क्रामन्ति )

शुक्रः —( सहर्षं, स्वगतम् ) अहो ! दानवेषु क्रुद्धस्यापि भगवतो वृषभध्वजस्य मयि नवं नवं सन्मानम् । ( प्रकाशम् ) अयि दानवेश ! सर्वताप ! अयि वत्स विशदाशय ! इत आगम्यताम् । सम्भावयामः समरपीडितानसुरान् ।

( इति निष्क्रान्ताः सर्वे )

॥ इति महामात्यवत्सराजविरचिते त्रिपुरदाहाभिधाने डिमे तृतीयोऽङ्कः ॥

## अथ चतुर्थोऽङ्कः



( नेपथ्ये )

प्रसृमरमयूखविशिखः सूर्यः संहरति वैरितिमिरौघम् ।
न हि यस्य रथयद्धर्चा दूरमदूरं किमप्यस्ति ॥१॥

**विशदाशयः**—( श्रुत्वा, प्रतिबुध्य ) कथमायातं प्रभातम् । आः ! केनेमां प्रातरेव दुरुपश्रुतिं श्रावितोऽस्मि । अथवा स्तत्रमुखः कोऽपि······तत् । तदहं गत्वा गुरोर्भगवतो भार्गवस्य पादारविन्द-वन्दनां विदधे । ( परिक्रम्य, पुरोऽवलोक्य ) अयमस्ति भगवान् भार्गवः ········ रेनमन्तरपद्रव्यदुराभाकरम्बितं स्फटिकमिव कश्मलमवलोकयामि । ( सहसोपसृत्य ) भगवान् भार्गव ! एष त्वां [ विशदाशयः ]अभिवादयते ।

**शुक्रः**—सौम्य ! चिराय जीव ।

**विशदाशयः**—( सप्रश्रयम् ) किं पुनरद्य भगवन्तमन्यादृशमिव विभा-वयामि ।

**शुक्रः**—( सखेदम् ) अयि विशदाशय ! दुःस्वप्नदर्शनोपनीतवैमनस्येन मलिनीकृतोऽस्मि । तदहमिदानीं किमपि शान्तिकमनुष्ठातुं यतिष्ये ।

( नेपथ्ये )

अस्मत्पुण्यप्रकर्षेण षोडशाप्येकतां गताः ।
अधुना सद्य एवामी त्रयो यास्यन्ति पञ्चताम् ॥२॥

**विशदाशयः**—( आकर्ण्य ) केयमाकाशसरस्वत्या प्रहेलिकेवोदाहृता ।

**शुक्रः**—( क्षणमिव ध्यानं नाटयित्वा ) वत्स विशदाशय ! नेयमाकाशसर-स्वती व्याहरति । चित्रशिखण्डिनोऽमी त्रिपुरासुरोत्तापितास्तद्विना-शायोत्सहन्ते । विवेचितं मया महेशप्रमुखा दिगिशा हरिविरिञ्चि-क्रौञ्चारिनगेन्द्रनागेन्द्रचन्द्रसूर्यधर्माः षोडशापि त्रिपुरासुरवधाय बद्ध-कक्षाः संवृत्ता ऐक्यं गताः ।

**विशदाशयः**—( सखेदम् ) अहह ! अत्याहितम्, अत्याहितम् ।

शुक्रः—वत्स विशदाशय ! अकथनं दुःस्वप्नानां श्रेयस्तदिदानीं मुनिवचनेन मुखरीकृतोऽस्मि । आकर्णयतु भवान्—

सर्वाङ्गाभ्यङ्गधारः शिरसि विनिहतोत्तालबन्धकमाल-
स्तिष्ठन्नुष्ट्रे वसानो वसनमनुकृतप्लक्षबालप्रवालम् ।
बिभ्रद्वैवाहिकश्रीपरिकरमखिलं मङ्गलोत्तालतूर्यं
दृष्टो गच्छन्नवाचीं रजनिपरिणतौ सर्वतापो मयाऽद्य ॥३॥

तद्यावदहं शान्तिकं वैरिवञ्चनाप्रकारं च ( कर्णे एवमेव ) समाप्यागच्छामि तावदिह भवताऽवहितेन स्थातव्यम् । उत्साहभङ्गशङ्कया सर्वतापस्याप्यनिवेद्य यास्यामि । न चैते दूरस्थाः कालस्य गोचराः । अतो न त्वया भेतव्यम् ।

विशदाशयः—( सखेदं, निःश्वस्य )—

चरन्तु दूरतः स्वैरं मृत्योरेते न दूरतः ।
येषु पातकपक्वेषु सरोषो वृषभध्वजः ॥४॥

शुक्रः—अयि ! मा विषीद—

यद्यद्भवति विधेयं यदा यदा तद्विधेहि सद्बुद्ध्या ।
भगवानचिन्त्यचरितो वत्स ! विधेयो विधिः कस्य ॥५॥

भगवन्तमपि वरदातारं धातारं नारदेनोद्दीप्यमानक्रोधानलं पश्यामि ध्यानमग्नेन नयनेन । तद्गच्छावहितो भव । अहमपि समीहितं साधयामि ।

( इति निष्क्रान्तौ )

[ इति विष्कम्भकः ]

[ ततः प्रविशति विरिञ्चिर्नारदश्च ]

विरिञ्चिः—( सनिर्वेदम् ) वत्स नारद ! किं मां कदर्थयसि—

मद्वाणीसारणी या स्फुरदमृतवरा दैत्यवृक्षानपुष्णात्
सद्यः सैवोग्रदावानललहरिरिव ज्वालयेत्तान्कथं नु ।
ऐश्वर्यं यस्य लोकत्रितयकरुणया विघ्नव्याहताङ्गं,
देवो रौद्रः स रौद्रैर्दलयतु दनुजान्निग्रहैः कालपक्वान् ॥६॥

नारदः—तात ! अलं कम्पेन । माननीयस्य तव शासनस्यैष प्रभावः, यदमी त्रिपुरासुरकीटका इयतीं कोटिमारूढास्तद्वधं दुर्विधेयं भगवान् भर्ग एवाङ्गीकुरुते । तदलमिदानीमलीकपरामर्शमन्थरतया । पश्यन्तु तातपादाः !

देवस्य प्रमथाधिपस्य रथिनः पृथ्वी रथः स्यात्परं
तात ! त्वामपहाय तत्र कतमः सारथ्यकर्मक्षमः ।
कोदण्डो गिरिराज एव भुजगप्रष्ठस्तदीयो गुणः
स्यादौचित्यवती त्रिविक्रमतनोस्तस्यैव तद्बाणता ॥७॥

( नेपथ्ये )

भ्रातर्नारद ! त्वरय त्वरय, तातपादान् । आरूढ एवायं भगवान् धन्विधुर्यो धूर्जटिः पृथ्वीरथम् ।

नारदः—( सहर्षौत्सुक्यम् ) अयि तात ! ज्येष्ठस्तत्र सुतो धर्मोऽयं व्याहरति । पश्य—

देवेनान्धकसूदनेन रथिना सोत्साहमध्यासितः
प्राप्तोऽयं पृथिवीरथोऽद्भुततमः सप्ताम्निलाश्वैश्चलन् ।
चक्रीभूतसुधाकरार्ककिरणस्तोमेन विस्तारिणा
स्वर्गङ्गासरसीरुहेषु युगपन्निद्राप्रबोधौ दधन् ॥८॥

एते च महेन्द्रप्रभृतयोऽदितिजा अनुधावन्ति ।

ब्रह्मा—( विलोक्य, सोत्सुक्यम् ) तात नारद ! एह्येहि ।

( उभावुपसृत्य रथाधिरोहणं नाटयतः )

ब्रह्मा—( महेशमालोक्य सप्रश्रयम् ) आयुष्मान् ( इत्यर्धोक्तौ सव्रीड-स्मितम् ) भगवन् भर्ग ! एष त्वां तव सारथिः प्रणमति ।

महेशः—( सूत इत्यर्धोक्तौ, सलज्जम् ) शान्तं पापम् । प्रणमामि पितामहम् । कुरु सारथ्यम् ।

( ब्रह्मा नाट्येन सारथ्यमध्यास्ते )

नारदः—( ससम्भ्रमम् )—

धनुर्धरद्वरं लक्ष्यं यो मुक्तोऽपि न मुञ्चति ।
सोऽयं निर्वाणकृद्बाणस्तात ! विष्णुः प्रणम्यताम् ॥९॥

ब्रह्मा—( ससम्भ्रमम् ), ( प्रणम्य ) वत्स नारद—

अनेनाविद्धमेवास्ति विष्णुबाणेन विष्टपम् ।
अस्येच्छया सपक्षस्य जीवति म्रियतेऽथवा ॥१०॥

वासुदेवः—( ससम्भ्रमम् ) अभिवादयतेऽत्र भगवन्तमाचार्यम् ।

( सर्वे यथोचितमुपविशन्ति )

महेशः—( पुरोऽवलोक्य, साश्चर्यम् ) आः ! पश्यत, पश्यत—

सौवर्णं पुरमभ्युपैति निकटं यस्योत्कटैरंशुभिः
संवीतं वियदङ्गणं तुलयति स्वर्णाचलोपत्यकाः ।

विष्णुः—( साश्चर्यम् )—

गङ्गाडम्बरकारि कान्तिपटलं तत्पृष्ठतो राजतं

ब्रह्मा—( साश्चर्यम् )

प्रयग्राम्बुदवृन्दविभ्रमकरं लौहं तदीयान्तिके ॥११॥

महेशः—अहो दानवानां शौर्यमदमोहितानां बुद्धिविपर्ययो यदमी स्वयमेवैकशरशरव्यतां प्रतिपद्यन्ते ।

विष्णुः—( सवितर्कम् ) कथं नु ते शुक्रसचिवा एवं विमुह्यन्ति । नूनमन्यैव सा क्वचिदस्ति सत्या पुरत्रयी । इयं पुनरन्यैव ।

( ततः प्रविशति सौवर्णेन पुरेण विहरन्, सपरिवारः सर्वतापः )

सर्वतापः—( सगर्वरोषम ) आर्य विशदाशय ! पश्य, पश्य, देवानां दुर्विनयं, यदियमस्मत्प्रतियोगिनी अपरा पुरत्रयी निर्मिता । गच्छ ! रे स्फुटाक्षर ! गच्छ । आनय सूर्यतापचन्द्रतापौ सपुरौ । दह्यतामियं देवनिर्मिता पुरत्रयी ।

स्फुटाक्षरः—( पुरोऽवलोक्य ) कधं आगदय्येव सुज्जतावचंदतावा । पेक्खदु देवो । ( छाया ) [ कथमागतावेव सूर्यतापचन्द्रतापौ । प्रेक्षतां देवः । ]

सर्वतापः—( दृष्ट्वा, सहर्षम् ) साधु साधु ! एनाभ्यामपि दृष्टैव मायामयी त्रिपुरी ।

विशदाशयः—( साकूतं विहस्य ) दैत्यनाथ ! किमाकुलोऽसि ? निवर्तय पुरत्रयम् ।

सर्वतापः—( सक्रोधम् ) अहो ! भवतः साचिव्यम् । द्वितीया पुरत्रयी योद्धुमभ्येति । त्वं च विहससि ।

विशदाशयः—( सौत्सुक्यम् ), ( उत्थाय ) ( कर्णे )—'एवमेव' इति ।

सर्वतापः—( सक्रोधम् ) आः ! किमनेन मृषा कर्णजापेन ! को विश्वसिति भवतां देवतानुगतमुनिकुलोत्पन्नानां द्विजन्मनाम् । यद्येवं किमिति

मामसम्भाष्यैव शुक्रो गतः । एवं कृते किमस्मासूपकृतं प्रत्युतापकृतमेव । तथा हि —

पुरत्रयं दाहयता शिवेन
निर्माय मायामयि चेत्स शुक्रः ।
कृतो हरेण त्रिपुरस्य दाहः
तदेष रूढः परमोऽपवादः ॥१२॥

तदार्य ! यथेच्छं गम्यतां तावत् । यदस्मासु भावि तद्भविष्यति ।

**विशदाशयः**—( सरोषं स्वगतम् ) नूनं प्रत्यासन्नभ्रमस्य । विपर्यस्ता बुद्धिस्तदेवमेवास्तु । ( प्रकाशम् ) एष यामि गुरोः सकाशम् ।

( इति निष्क्रामति )

**महेशः**—( सत्यपुरत्रयीमालोक्य, साश्चर्यम ) फलितं त्रिविक्रमवितर्केण । आगता पुरत्रयीयमपरा ।

**ब्रह्मा**—का पुनरनयोः सत्या का मायामयीति न ज्ञायते ।

**नारदः**—( सौत्सुक्यम् ) किमनेन परामर्शप्रसारेण । बाणगोचरतां गता इयमपि वध्यताम् ।

**कृष्णः**—( सपरिहासम् ) रोचते कलिप्रियाय । किन्तु क्षणं प्रतीक्ष्यताम् ।

**सर्वतापः**—( सगर्वरोषम् ) अयि सूर्यताप ! अयि चन्द्रताप ! त्वर्यतां, त्वर्यतां, हन्यतां हन्यतामियं देवनिर्मिता पुरत्रयी ।

( इति बाणवर्षं नाटयन्ति सर्वे )

**महेशः**—( साश्चर्यमालोक्य ) अहह ! दृश्यतां, दृश्यताम् ।

( सवितर्कम् )

अयमरजनिजन्मा किन्नु कोऽप्यन्धकारः
किमयमनलबाह्यः कोऽपि धूम्यावितानः ।
अयमशुभसमुत्थः शालभः किं समूहः
किमयमसुरसैन्यान्निर्गतो बाणपूरः ॥१३॥

**कृष्णः**—( साश्चर्यम् ) कथमपगतैव प्रथमोद्गता पुरत्रयी । अहो महीयानयं मोहो, यदियं दैत्यपक्षपातिनी द्वितीया त्रिपुरी । तत्किमिति सर्वतापादिभिर्द्राविता । नूनमेषा सुगुप्तं शुक्रनिर्मिता भविष्यत्यनभिज्ञैरेभिर्दृप्तैरुच्छिद्यते । भवतु अभिमतमेव नः ।

**सर्वतापः**—( विभाव्य, सगर्वम् ) कथमपसृतैव देवसृष्टा कपटत्रिपुरी ? ( सक्रोधम् ) आकाशे लक्ष्यं बध्वा —

रे रे ! सुराः समरकर्मणि निर्विकारे
क्लीबाः किमित्यहह ! कै..वमारभध्वम् ।
किन्ते वयं दितिसुताः कपटप्रधानै-
स्तैस्तैर्भवद्विलसितैः प्रलयं ययुर्ये ॥१४॥

**नारदः**—( सौत्सुक्यम् ) किमिदानीं प्रतीक्ष्यते ? प्रत्यासन्ना एव हन्यन्ताममी ।

**महेशः**—अयि नारद ! कोऽयमवसरः पराक्रमस्य —

स्वेनैवेषुपथे भवन्ति यदमी दर्पज्वरोन्मोहिताः
पाणिं कस्य धनुर्ग्रहीष्यति हहा ! हन्तुं तदेतानपि ।
तुच्छे कर्मणि भूरिडम्बरधरं धिग्धन्विनं धिग्धनु-
र्धिग्बाणं धिगमुं रणव्यतिकरं धिक्सारथिं धिग्रथम् ॥१५॥

**कृष्णः**—( सोत्प्रासम् ) अयि कलिप्रिय ! साधूक्तं परमेश्वरेण । प्रतीक्षतां, भवन्तु तावदमी भूयोऽपि तथैव दुर्द्धर्षाः । दुराधर्षे हि विद्विषि विक्रमः प्रकर्षमभ्युपपद्यते ।

**स्फुटाक्षरः**—( सप्रश्रयम् ) नाह सव्वताव ! णिद्दलिदो दाव एस वैरीण वंचणापवंचो । ता संपइ तहतहच्चेअ णिअट्ठाणेसु संचरन्तु सुज्जतावचन्दातवा । ण एआरिसी णीदी भोदि, जं एक्कठाणे चिट्ठीअदि । ( छाया ) [ नाथ सर्वताप ! निर्दलितस्तावदेष वैरिणां वञ्चनाप्रपञ्चः । तत्सम्प्रति तथा तथैव निजस्थानेषु सञ्चरतां सूर्यतापचन्द्रतापौ । नैतादृशी नीतिर्भवति, यदेकस्थाने स्थीयते । ]

**सर्वतापः**—( सोत्प्रासम् ) स्फुटाक्षर ! क्रोधनोऽसि । कस्ते वचन-मुल्लङ्घयितुं पर्याप्तः ? कारय यथोचितम् ।

**स्फुटाक्षरः**—जं आणवेदि सामी । ( छाया ) [ यदावेदयति स्वामी । ]

**( इति निष्क्रम्य तथा तथा कारयति )**

**कृष्णः**—( ससम्भ्रममवलोक्य ) अयि महेश ! दृश्यतां, दृश्यताम् । इदानी-ममी सुष्ठु समधिकान्तराले संवृत्ता न जाने घातगोचरे भविष्यन्ति न वेति ।

**महेशः**—( सहर्षोल्लासं सहसोत्थाय ) हता एवामी । क इदानीं सन्देहः ? वाहयतु भगवान् विरिञ्चिर्वेगेन रथम् ।

( विरिञ्चिस्तथा करोति )

**नारदः**—( व्याकुलतामभिनयन, ससम्भ्रमम् ) आः ! कथमात्मानमपि नानेन रथरयेण जानामि । क्व मे दर्शनश्रवणशक्ती । अयि परमेश ! तदहं कुतूहलावलोकनतरलमुनिमण्डलमध्ये कैलासारूढो द्रक्ष्यामि ।

( इत्यन्तरिक्षगत्या तथा करोति )

**नारदः**—( पुरोऽवलोक्य साश्चर्यम् )—

बाणो हरिर्विजयतेऽन्धकसूदनस्य
वाग्गोचरा भवति यस्य न वेगलक्ष्मीः ।
लक्ष्यं किमप्यभवदन्यदिवाभिगम्यं
मार्गायितं पुनरमुष्य पुरत्रयेण ॥१६॥

आर्य धर्म ! पश्य, पश्य । कृतार्थय चक्षुषी । युगपदेव ज्वलतीयं पुरत्रयी शङ्करशरानलेन ।

**धर्मः**—( सपरितोषमालोक्य ) साधु, साधु—

प्राग्यागविघ्नप्रथितोरुवैरः
त्रतानलोऽयं कलितावकाशः ।
बलेन शम्भोस्त्रितयं पुराणां
ज्वालाकरालः कवलीकरोति ॥१७॥

( नेपथ्ये )

अस्पृश्यस्पर्शकारः प्रसभमपनयन्वर्णभेदव्यवस्थां
लोकं निःसीमशोकं रुदितमयदृशं कल्पयन्कान्दिशीकम् ।
कुर्वन्सन्मार्गरोधं शिशुयुवतिगुरुध्वंसकर्मण्यशङ्कः
कुस्वामीवैष वह्निः प्रलयमुपनयत्याशु हा धिक्पुराणि ॥१८॥

अपि च,

शय्यां श्रान्त इवाभ्युपैति नृपवद्भद्रासनं सेवते
गर्भागारमुपैति कामुक इव द्रोहीव रुन्धे दिशः ।
स्वैरं वीर इवाश्वहस्तिनिवहान्मश्नाति वह्न्यात्मकः
कोऽयं कोऽयमहो पुरत्रयकृते धिग्देव ! सृष्टस्त्वया ॥१९॥

( ततः प्रविशन्ति मुनयः )

मुनयः—( श्रुत्वा, सहर्षम् ) दिष्टचा श्रुतं तावदद्य श्रोतव्यम् ।

नारदः—( नभोऽवलोक्य, स्वगतम् ) आर्याः ! व्याकुलोऽस्मि, न पश्यामि देवान् ।

मुनयः—( साशङ्कम् ) तात नारद ! निरूपय, निरूपय ।

नारदः—( दृग्बाधामभिनयन् ) आर्याः ! किं निरूपयामि ?

कवचितककुभोऽमी श्यामला धूमकूटाः
कनकशिखरिशृङ्गप्रांशुरर्चिः प्रपञ्चः ।
तरुणतरुणगुञ्जापुञ्जपिङ्गाः स्फुलिङ्गाः
किमपि नभसि नान्यत्तुर्यमालोकयामि ॥२०॥

मुनयः—( पुरोऽवलोक्य, सहर्षम् ) अहह ! हर्षव्याकुलोऽसि । किन्न पश्यसि निखिलसुरपरिवारं रथारूढमायान्तं त्रिपुरान्तकम् ।

( ततः प्रविशति यथानिर्दिष्टो महेशः )

महेशः—भगवन्, सुरज्येष्ठ ! स्थापय रथम् ! स्थीयतामिहैव क्वापि मुनि-नारदसनाथे कैलासैकदेशे ।

( ब्रह्मा तथा करोति )

[नारदाद्याः ससाध्वसमुपसृत्य प्रणमन्ति]

महेशः—अयि देवाः ! सर्वे रथादवतीर्य यथायथमुपविशत । उपविशन्तु चात्रभवन्तो मुनयः ।

( सर्वे तथा कुर्वन्ति ऋषयः )

[सहर्षं, महेशः सव्रीडमास्ते]

नारदः—( सहर्षम् ) अयि जगन्नाथ ! किं ते देवा उचितं पारितोषिक-मिहाद्भुते कर्मणि कुर्वन्तु ?

उत्कृत्य मौलिकमलैर्नवचन्द्रचूड !
त्वं पूज्यसे यदि किमप्युचितं तथा स्यात् ।
तुभ्यं तदप्यहह ! न स्वदते शिवाय
त्रैलोक्यरक्षणपराय किमत्र कुर्मः ॥२१॥

महेशः—( सव्रीडस्मितम् ) अयि नारद,

वैकुण्ठः पद्मजन्मा त्रिदशपरिवृढः पावकः प्रेतनाथो
रक्षो वारामधीशः पवनधनपती सूर्यचन्द्रौ कुमारः ।
धर्मो शेषाद्रिराजावहमपि तरलः षोडशः कौतुकार्थी
मामेवैकं किमित्थं त्रिपुरवधविधौ श्लाघसे नारद ! त्वम् ॥२२॥

इन्द्रः—( सप्रश्रयम् )—

व्याप्रियन्ते त्वया स्वैरं निजा अवयवाः सुराः ।
त्वमेकः पुरुषः स्तुत्यः पृथग्गणनयात्र किम् ॥२३॥

महेशः—( स्वगतम् ) अये ! सङ्कोचयति मामियं व्रीडा । तद् विसर्जयामि निर्जरान् । ( प्रकाशम् ) अयि भगवन्तो गीर्वाणाः ! स्थीयतां यथायथं यथासुखं, समादिशत च किमिदानीं करोमि ।

इन्द्रः—( सप्रश्रयम् )—

त्रयोऽप्येते त्वया दैत्या दोषा इव निराकृताः ।
अक्षयाणि जगन्त्यासन्प्रार्थ्यते किमिवाधुना ॥२४॥

तथापीदमस्तु—

चूडाचन्द्रावदातेन स्फुरद्भालाक्षिरोचिषा ।
निरस्तमोहतिमिरं त्वयाऽस्तु हृदयं सताम् ॥२५॥

( इति निष्क्रान्ताः सर्वे )

॥ इति महाकविवत्सराजविरचितो त्रिपुरदाहाभिधानो डिमः समाप्तः ॥



श्रीवेङ्कयार्यविरचितः

# महेन्द्रविजयः

## अथ प्रथमोऽङ्कः

श्रीरम्यावसथप्रदोऽपि करुणाधारोऽपि धूरीकृत-
न्नौरव्यापृतिरप्यरिद्विपघटीपारम्परीदारणे ।
वीरस्सिंसह[1] इवानुरूपरसभृत्सुप्तोत्थितश्चासयः
श्रीरामस्स भवत्वभव्यहरणे क्षेमादयस्सूतये ॥१॥

सुग्रीवाज्ञासमुत्थक्षितिदयितवधूर्दुर्दशोद्भूतधूमः
प्रज्वालः पङ्क्तिकण्ठोपवनघनलताकुञ्जपुञ्जोदरेषु ।
रक्षःस्थानीय[2]भस्मीकरणभृशसमुल्लोलवालाग्निरूपः
प्रत्यूहव्यूहतूलं प्रदहतु [3]हनुमत्प्रौढतेजोविशेषः ॥२॥

( नान्द्यन्ते सूत्रधारः )

**सूत्रधारः**—( सभाभिमुखमञ्जलिं बद्ध्वा[4] )—

समग्ररसमेदुरस्समुदयालिसम्मोदनः
स एष कुसुमाञ्जलिस्समवकीर्यते साम्प्रतम् ।
भवद्भिरनुगृह्यता[5]मयमपि प्रणामाञ्जलिः
शिखण्डकटिमण्डनं शिरसि सन्ततं धार्यते ॥३॥

( इति पञ्चषाणि पदानि गत्वा, आकाशे कर्णं दत्त्वा )—किं ब्रूथ ?

यन्नैवास्ति समस्तसंस्तुतिपदप्रोद्भासिनो षड्रसा
यत्र प्रच्युतिकैतिवृत्तिघटना धीरोद्धतो यत्र राट् ।
यद्देवासुरयक्षराक्षसचमूसङ्घर्षणाद्यद्भुतं
तद्भूयादधिदृक्पदं डिमपदप्रख्यातकं रूपकम् ॥४॥

---

१. ०स्सिह्य; २. ०स्थानीय्य०; ३. प्रदहतु मत्प्रौढ०; ४. बद्ध्वा।
५. ०गृह्यतां अय० ।

( सहर्षम् ) अनुगृहीतोऽस्मि रसिकपरिषदा । तथा हि —

यद्विद्यानिचयार्जनं यदपि वा साहित्यमत्यद्भुतं
यद्वा सत्कुलजन्म यज्ञविबुधश्लाघ्योपशान्तिव्रतम् ।
तत्सर्वं सुकृतैकलभ्यमिदमप्यास्तामहं तु ब्रुवे
सत्यं धन्यतमस्त्वमस्य सरसस्थानस्थली मानवैः ॥५॥

( नेपथ्याभिमुखो भूत्वा ) मारिष, इतस्तावत् ।

( प्रविश्य )

**मारिषः**—भाव, अयमस्मि ।

**सूत्रधारः**—अहं किल निखिलभुवनकलालङ्कारगुणारामश्रीरामपुरोपरि-वास्तव्यस्य, समसमस्तसमनस्तलीसेव्यस्य, निरन्तरनिगमागम-घण्टावधसमागमसमुल्लासपद[1]योजरतो, व्रजोच्चाटितजगद्भय-महाभूतस्य, नमदमरकल्पभूजातस्य, निरपायसम्बन्धबन्धुरता-ख्यातसीतावधूसनाथस्य, भगवतस्तिरुवेङ्कटनाथनाम्नो रघुनाथस्य, महोत्सवावलोकनकौतुकितहृदा रसिकपरिषदा सदयमादिष्टोऽस्मि, मारिष ![2] श्रीः ( यन्नैवेत्यादि पठित्वा )— तत्सज्जीक्रियन्तां रङ्गमङ्गलविधिः ।

**मारिषः**—सर्वं समीचीनमेव, किन्तु तादृशरूपकान्वेषणव्यग्रतया मम विचारमेदुरमन्तःकरणम् ।

**सूत्रधारः**—किं विचार्यते कण्ठरत्नमिव प्रमत्तेन ? नन्वध्यापितं महेन्द्र-साहसनिरातङ्कः श्रीवेङ्कयार्यो महेन्द्रविजयं डिमरूपकं[3] तादृश-गुणगणनाभाजनम्[4] ।

**मारिषः**—( स्मरणमभिनीय ) ज्ञातम् । यस्य खलु निरर्गलानन्दरसप्रापक-स्यापि, रूपकस्य कवयिता नवनवोन्मेषभूषणः, प्रगल्भ-जनजेगीय्यमानमधुरसधोरणाबन्धुरप्रबन्धनिर्वाहसाहसनिरातङ्कः श्रीवेङ्कयार्यनामा सुधीमणिः ।

**सूत्रधारः**—अथ किम् ?

**कर्णाटरामायणकाव्यकर्ता कश्चिदद्वैतकृतेर्महान् यः ।**
**जगौ हनूमञ्जयमाञ्जनेयशताभिधं कामविलासभाणम् ॥६॥**

---

१. ०पदं; २. सूत्रधारकः—श्रीः; ३. नाम····· तादृश०; ४. ०भजनम् ।

अपि च —

कुशलवचम्पूजनिकृत्कुक्षिम्भरभिक्षुकप्रहसनाख्यः ।
सीतापरिणयघटनाख्यातषड्दर्शनीनेता ॥७॥

अपि च —

यश्च वाचाम्बि[1]कागर्भशुक्तिमुक्तामणिप्रभः ।
यं हम्पर्या[2]र्यदुग्धाब्धिबन्धुमिन्दुं प्रचक्षते ॥८॥

**मारिषः**—जानास्यार्य, जानामि । एष खलु —

श्रवणस्मरणविलेखनपठनरसावेशतः पुरा स्वकृतेः ।
श्रुतिहृदयकरहृदा[3]भरणानि ददाति राति नो चेतकः ॥९॥

**सूत्रधारः**—प्रतोषितकविग्रामः प्रसादरसबन्धुरः ।
परिष्करोति वेङ्कटेन्द्रः शरत्समयवद्दृशः ॥१०॥

**मारिषः**—( पुरोऽवलोक्य ) सत्यं शरत्समय एवाद्य वर्तते । यतः —

उच्छ्राय प्रतिमानिषेधकलनामातन्वते केवलं
स्वीयैरेव पटाञ्चलैररिजनप्रस्थानकेलीजुषाम् ।
आकृष्यापृतनाततेररिजनस्फारप्रकाशोदयै-
र्भेरीभाङ्कुरणैश्च हंससदसामाह्वानमन्त्रीयते ॥११॥

सर्वमपि सुघटितमनुपदि न विधिना ।

कृती कविः कृतिश्चापि भूतिस्सम्यगलङ्कृतिः ।
सभारसर्वनिनाप्येवं यं विज्ञात्युभा शरत् ॥१२॥

इति । अतः —

प्रकटितरसास्वादचिकीर्षाभवेऽपि रामये ।
किमये, विलम्ब्यते भूमिका[4]परिग्रहे नटवर्गेण ॥१३॥

**मारिषः**—न जानासि, किमालम्बं विलम्बस्य ?

**सूत्रधारः**—कीदृशः ?

**मारिषः**—अस्ति खलु भ्राता तव वर्षीयानमर्षणः ।

**सूत्रधारः**—स खल्वद्य किमाचारो वर्तते ?

---

१. ०वाम्बिगर्भ०; २. हं पर्यायदु०; ३. ०करहया०; ४. भुविका ।

**मारिषः**—असकेनापि मन्त्रवादिना विकृष्य, विद्वांसं पदप्रतिपादिषु निवेशितम् ।

**सूत्रधारः**—आश्चर्यमाश्चर्यम् । तत्र किं प्रतिपन्नमनेन सर्वज्ञेनैव भवता सहायेन महानपि पुरुषोत्तमताभाजा पुनस्तां प्रतिपत्स्यते ।

( नेपथ्ये )

साधु, रे साधु ! यदेष महाराजमहेन्द्रोऽपि दुर्वारदुर्वासस्तपोविशेषनिरस्तामपि न्यस्ता [1]मदहितेषु बलप्रभृतिषु पुरुषोत्तमसहायेनैव श्रियमपि विजयेश्रिया सह पुनराक्रष्टुमीष्टे ।

**मारिषः**—अये, गृहीतनारदवेषो रङ्गवल्लभो नाम मम स्यालः, तदीयान्तेवासिप्रतिरूपकेण कलकन्तकेन सह रङ्गभूमिमवतरति । तदावामप्यनन्तरकरणीयाय[2] सज्जीभवावः ।

( इति निष्क्रान्तौ )

॥ इति प्रस्तावना ॥

( ततः प्रविशति नारदश्शिष्यश्च )

**नारदः**—( सर्वज्ञेनेत्यादि पठित्वा )—वत्स, अनया सुखोपश्रुत्या किञ्चिदाश्वस्तमिव मे हृदयम् ।

**शिष्यः**—अञ्चरियम् । अन्ते वो विसेसकिसांणिमुन्तलोअतंवाणिविआरञ्झपादणिणिं तातणिएंवं गदागदेहिं अप्पाकीलिञ्जिदि ।

( छाया )–[ आश्चर्यम् । यत्तव विशेषकलाविमुक्तलोकतन्त्राणामपि आराध्यपादानां निष्कारणमेव गतागतैरात्मा क्लाम्यति । ]

**नारदः**—वत्स, मैवं वादीः—

**प्रसृजति विरागिणां वा प्रायो हृदयं सुहृत्वभाजिजने ।**
**किमभिलषन्निह लोहसरो यमुपयाति मणिमयस्कान्तम् ॥१४॥**

**शिष्यः**—अन्धि एदम् । वट्ट, विकोणुखु तारिर्सणितंणणं पन्तन्तन्तभवंवणिति तङ्केमि । चेण ईलिसेपलिम्भमणि पाविदे असि ।

( छाया )–[ अस्त्येतत्तथापि को नु खलु नारदमित्रत्वपात्रं तत्रभवतामिति तर्कयामि, येनेदृशं परिभ्रमणं प्रापितमासीत् । ]

---

१. महितेपु; २. करणीय्याय ।

**नारदः**—नन्वस्ति निस्तुलप्रतापातपवृन्दकान्दसीदकृतपरिपन्थिजनाधिकारः स्वभागधेयवशीक्रियमाणसमनस्तुतिः । अनुपदप्रगल्भमहिमा पुरन्दरो नाम असुरेन्द्रो मन्दरधराधरद्रोण्याम् ।

**शिष्यः**—अहमहे ! तिलोयीपदितणेवि पंवदवासितणमिति दिह्मअं उपावेयि ।

( छाया )—[ अहो, त्रिलोकीपतित्वेऽपि पर्वतवासित्वमिति[1] विस्मयमुत्पादयति । ]

**नारदः**—नन्वत्र निगमागमजेगीय्यमानमहिमानो महर्षयस्सन्ति ।

**शिष्यः**—अदिमेंतण्णिउणं तणियदिहादि । एदं विना रिसंदेयलंजामि अल्लउंझु अनावशाणं असमपदेस्तपसनपापणे मनोलंजणे एदंसेति ।

( छाया ) —[ अतिमात्रं निपुणत्वं प्रतिभाति । एतदपि तादृशं देवराज्याधिकारमुज्झित्य तादृशानामाश्रमपदे प्रशान्तपावने मनो रज्यते तस्येति । ]

**नारदः**—वत्स, न खल्वेवम् । अद्य खलु तदखिलमप्यमराधिपत्यं दैत्यबलसहायशालिना बलिना वैरोचनिना समाक्रान्तम् ।

**शिष्यः**—सव्वं वि एंव दुरहिगमं सविआणम् । जंपदाविदीविदो महेन्दोन्ति पडमं एंव आणन्तम् । दाणिं उण बलिणा अवहरिदं तंसनंमजितिअ । अदो उवक्कमविलोहोवि अलक्खिअदि ।

( छाया ) —[ सर्वमप्येव दुरधिगमं संविधानम् । यत्प्रतापदीपितो महेन्द्र इति प्रथममेवाज्ञप्तम् । इदानीं पुनः बलिना हृतं तस्य साम्राज्यम्, इति च । अतः उपक्रमविरोध इति लक्ष्यते । ]

**नारदः**—महदतिक्रमपरिपाक एषः ।

**शिष्यः**—किदिसासो ? ( छाया ) —[ कीदृशस्य[2] ? ]

**नारदः**—अस्ति दुर्वासा नाम महामुनिरत्रेरौरसः पुत्रो न विनावतारः त्रिनेत्रस्य ।

**शिष्यः**—सण्णामि सुलहावोन्ति ।

( छाया )—[ श्रृणोमि सुलभकोप इति । ]

---

१. वासित्वमपि; २. कीदृशस्सः ।

**नारदः**—कदाचिदनेन कनकारविन्दमयी गिरिनन्दिनी प्रसादमूर्तिरिव काचिदुपहारीकृताहारतासमन्त्रकं महाराजमहेन्द्रः शापितो महामुनिना दुर्वाससा इति ।

**शिष्यः**—नि उणं खु आअरिदञ्जेरिधहाधेण णोपसंवणिञ्जो महालादीति । तदो, तदो ।

(**छाया**)—[ निपुणं खल्वाचरितम्, यद्रिक्तहस्तो न नोपसर्पणीयो[1] महाराज इति । ततस्ततः ? ]

**नारदः**—तेन च मदावलस्कन्धे निवेशितमात्रेव शुण्डादण्डेनाकृष्य शतधा शिथिलीकृता ।

**शिष्यः**—अहमहे ! महंलोखु पमादो । तदो तदो[2] ?

(**छाया**)—[ अहो, महान् खलु प्रमादः । ततस्ततः ? ]

**नारद**.—ततश्चातिरुष्टेन भ्रष्टश्रियो भवन्त्वमराः सुरारिभिरिति प्रथममभिदधानेन तदनु प्रार्थनावर्जितनमसा[3] सुमनसामधिपस्य भगवान् पुरुषोत्तम एव शं विधास्यतीति[4] भणित्वाऽन्तरधायि ।

**शिष्यः**—(**साश्चर्यम्**) तदो तदो ? (**छाया**)—[ ततस्ततः ? ]

**नारदः**— ततो विदितवृत्तान्तैर्दैत्यदानवयूथपैः ।
अभियुक्ता गणाद्घोरादमराः[5] परिदुद्रुवुः ॥१५॥

**शिष्यः**—(**सवैलक्ष्यम्**) अहमहे, महान्ते सुविषिसमन्तणी कालंस । तदो तदो ?

(**छाया**)—[ अहो, महानयं······विसमत्वं कालस्य । ततस्ततः ? ]

**नारदः**—यावद्भिः—

**यावद्भ्रमद्भ्रुकुटिशोणविसारितान्तं**
**आरादुदञ्चयति वज्रमसौ[6] महेन्द्रः ।**
**तावत्समेत्य गगनोत्थनिषेधवाचा**
**[7]वाचस्पतिस्तमपि मन्दरमानिनाय ॥१६॥**

---

१. ०णीया; २. इदो; ३. ०वीर्जनमसा; ४. फणित्वान्तर०; ५. ०दपरा ।
६. ˝— मसा ७. वाचस्पात० ।

शिष्यः—तदो किं पदिवण्णदाणवेहिम् ?

( छाया )—[ ततः किं प्रतिपन्नं दानवैः ? ]

नारदः—

आहृत्य सर्वे देवानां मध्ये कुलोनकर्मदेवानाम ।
आविश्य दिव्यनगरोमाक्रम्य सभां प्रशासते लोकान् ॥१७॥

शिष्यः—अच्चाहिदम्, अच्चाहिदम् । कहाण्णु खु पुणो वि पदिबज्जयि महालाअ महेन्दो णिअरज्जलच्छिम् ।

( छाया )—[ अत्याहितम्, अत्याहितम् । कथं खलु पुनरपि प्रतिपद्यते महाराजमहेन्द्रो निजराज्यस्य लक्ष्मीम् ? ]

नारदः—

विज्ञापितवृत्तान्तश्च रमाकान्तः शतमखमुखैः ।
बर्हिर्मुखैः चतुर्मुखमुखेन तदिदमाजिज्ञपत् ॥१८॥

शिष्यः—( सोत्कण्ठम् ) अहं विअ ?

( छाया )—[ कथमिव ? ]

नारदः—( कर्णे ) एवमिति[1] कथयति ।

शिष्यः—तहा जदि, सव्वं सुहादक्कं होवसदि ।

( छाया )—[ तथा यदि, सर्वं सुखोदर्कं भविष्यति । ]

( सहर्षम्, संस्कृतमाश्रित्य )

परं संभ्रमेणापि परतापापनोदिनः ।
परिभ्रमन् यथाधर्मं परिमार्ष्टि घनाघनः ॥१९॥

( इति निष्क्रान्तौ )

[ इति मिश्रविष्कम्भः ]

( ततः प्रविशति महेन्द्रो मातलिश्च )

महेन्द्रः—ततस्ततः ?

मातलिः—ततो गृहीतदानववेषेण केनचिदज्ञातेन समासादिता राजधानी ।

---

१. एवेति ।

**महेन्द्रः**—निपुणमुपक्रान्तं भवता ! ततः ततः ?

**मातलिः**—ततस्तत्र प्रवृत्तिमुपलभमानेन परिभ्रमता परितोऽप्यमरावतीं समधिगतवृत्तान्तस्सर्वोऽपि ।

**महेन्द्रः**—साधु, साधु ! किमवस्था पुरी वर्तते ?

**मातलिः**—

भग्नप्राकारबन्धं कठिनतरगदाघट्टिताच्छालकान्तं
विभ्रष्टद्वारशायी तटद्मणिगणा[1] विप्लुतस्तम्भजालम् ।
निर्भिन्नोदारशृङ्गाटकमतिविकटाः[2] [3]प्रोल्लुठद्वाजिशालं[4]
निश्शङ्कोच्चार्यमाणप्रतिभटरटनं प्रेक्षमाभोगमस्याः ॥३०॥

**महेन्द्रः**—( सामर्षम् ) आः, ममापि नामेन्द्रस्य पुरी परैरीदृशीमवस्था-[5]मुपनीतेति कृतमद्यापि क्षमया । ( वज्रमुद्यम्य[6] )—

अद्य प्रोद्यतदैत्यदानवगण-प्रत्यग्ररक्तच्छटा-
संरक्तप्रसृता कृतारिनगरी प्रत्यस्थली वाङ्गली ।
अर्कद्रोणमुखान्यसङ्कुचजनितान्यासाद्य भूतेशितुः
प्रक्रान्तस्तवनद्दिदा रतिशतैः कुर्यां सपर्यामहम् ॥२१॥

**मातलिः**—आयुष्मन्, दृष्टमेव शतशः समरकेलीषु महाराजस्य । कियानसुरजय इति ।

**महेन्द्रः**—अथ [7]कीदृशी दशा वैजयन्तस्य ?

**मातलिः**—

बन्दीकृतामरवधूमुखनिर्यदुष्ण-
निःश्वासमारुतसुधीकृत-मौक्तिकश्रीः ।
सन्दिश्यते सपदि हन्त, स वैजयन्तः
साधंस्वसार्धपदवाक्यदशानुरोधम् ॥२२॥

**महेन्द्रः**—( सोच्छ्वासहासम् )—

यद्वैरिमण्डलमणीमयभर्महर्म्य-
संरूढलग्नजतृणाङ्कुरसङ्कुलश्रीः ।
गारुत्मतभ्रममदावलिमध्वगाना
हा, हन्त, हर्म्यमपि तस्य तथेत्यमूं धिक् ॥२३॥

---

१. ०शापीतमणिगण०; २. ०विकट०; ३. प्रोत्थल्लु०; ४. ०वाज० ।
५. ०दृश०; ६. वज्रमुद्रचम्य; ७. कीदृश० ।

( इति दन्तान् कटकटाययन् ) —अये[1] —

कस्य वशेऽभ्रमातङ्गः, कस्य वशे तुरङ्गस्तारङ्गक[2] एष ।
जलधेः कस्मै विकीर्णश्चिन्तामणिः, कुत्र दुग्धे कामदोग्ध्री च ॥२४॥

तत्र की[3]दृश्यः कामिन्यः ?

मातलिः —

निर्याति यत्र मदवानिव वज्रकुन्तै-
र्वप्रप्रवीरभटसहृतिरामरीय्यम् ।
तूर्णं समेत्य पृथुका अपि दानवीयाः
कर्णा लुठन्ति कठिनोऽपि कृशस्य दीनाः[4] ॥२५॥

अपि च —

अनियन्त्रणसम्पातैः अप्सरश्चयसङ्कटे ।
अपि गन्धर्वनामार्धमाससादमरो हयः ॥२ ॥

किञ्च[5] —

कलशाब्धिजनेर्मणेस्तवाग्रे
कलिपूजा कति वा प्रदक्षिणानि ।
दृतमात्तसा[6] सखी क्षणार्धं
दृषदा घ्नन्ति तमर्भकारिपूर्णम्[7] ॥२७॥

अन्यच्च —

चतुर्विधैरभ्यववार्यराशिभि-
स्सुधाझरीनारचयत्पुरा[8] चया ।
सुरा विषापादनसम्भवन्नवा
सुधारिगौरद्य कृशा भृशं तनौ ॥२ ॥

महेन्द्रः —हन्त,

यदवचितये जालं नालं सुरद्रुमजन्मना-
मपि सुमनसां यस्मिन्नाकस्मिको नयनोत्सवः ।
तदतिचरितं वस्तुव्रातं बताद्य कृतद्रुहा
कितवसदसा जीवामो वा कियच्छ्रवणावधिः ॥२९॥

( इति श्मश्रूनामृशति )

---

१. असे; २. ०ङ्गकः; ३. दृ; ४. दीणी; ५. किम्; ६. दृतमान्त० । ७. ०पूर्णाम्; ८. ०झरीनारथत्० ।

**मातलिः**—आयुष्मन्, इदमप्यन्यदन्याय्यम् ।

**महेन्द्रः**—कथम् ?

**मातलिः**—

असुराधिभुवां प्रमोदहेतो[1]-
रसक्तसङ्गमलोलुपान्तराणाम् ।
सुरपासरयोदयाद्यसौर-
स्तदराशिः तृणराजिराजभाजौ ॥३०॥

**महेन्द्रः**—( करावास्फाल्य ) भवतीग्रक्रशानां देवानां[2] कीदृशी वृत्तिः ?

**मातलिः**—किं कथयाम्येषामुदन्तम् ?

निष्कासिता दितिजबाहुकृतार्धचन्द्रे
उत्कर्षिका दृढपुरातन[3]कर्मपाकैः ।
उच्चैरथ प्रपतनानुकृतान्नशङ्कु
गच्छद्दशां दधति कामपि कर्म देवाः[4] ॥३१॥

**महेन्द्रः**—उचितैव परिपाटी तेषां, यदेते दूरमुत्सृज्य स्वातन्त्र्येणावतिष्ठन्ते । अथ देवर्षयः कमनुसृत्य वर्तन्ते ?

**मातलिः**—

उत्त्राणामसुरपरत्वमीरयन्तः
माधुर्यं स्तुतिषु बहिर्निवेशयन्तः ।
मौनावस्थितिमनुदीरणे वहन्तो
मालिन्यं किमपि महर्षयः श्रयन्ते ॥३२॥

**महेन्द्रः**—आः किमेतादृशीमेव जीविकां अनुमन्यन्ते ?

**मातलिः**—आयुष्मन्,

कनककमलनिर्यन्मञ्जुमारं दधानः
परिचयहिमवानस्पन्दसन्दानि तेषु ।
सुरसरिदुपकण्ठप्रोल्लसत्सैकतेषु
प्रसरदति[5] नमश्चेत् कः क्षमेतारिबाधाम् ॥३३॥

---

१. ०हेतोः; २. ०तीकशदिवानां; ३. ०तनः; ४. ०दैवाः; ५. प्रसदति ।

महेन्द्रः—कथं पुनरप्सरसां व्यावृत्तिः ?

मातलिः—

यो यः पश्यति तस्य तस्य पुरतो नृत्यन्ति भृत्यावृता
यत्किञ्चित्पुरुषं रता उपनता स्वीकुर्वते सर्वतः ।
यत्किञ्चिद्यदि दीयते विदधते तत्राप्यनन्तादराः
किं वक्ष्याम्यहमप्सरोजनवशीकारो प्रतिद्वन्द्विनाम् ॥३४॥

अन्यदपि [1]जुगुप्सितमसुराणामाचरणम् । तथा हि—

गोपीचन्दनपुण्ड्रमेहनमथो कृष्णाजिनाकर्षणं
प्रायस्संहितकण्ठलम्बतुलसीहारापहारोद्यमम् ।
झारीलुण्ठनमम्बरान्तविगलच्छ्वाससमुत्पाटनं
हा, कष्टं, कलयन्त्यमी दितिभवास्ते कर्मदेवा बलेः ॥३५॥

ये प्रबन्धानुसन्धानधुरीणा निरतं द्विजाः ।
तानेवाध्या[2]पयन्त्येते सर्वाश्चार्वाकसंहिताः ॥३६॥

आद्ये प्रवृत्त्याध्ययनप्रवृत्ता-
नध्यापयन्त्यात्मकुभाषितानि ।
उद्धृत्य देवायतनेषु देवान्
उष्ट्रान्निबध्नन्ति खरान् कुरङ्गान् । ३७॥

महेन्द्रः—अहो, महोत्साहो [3]मेदमेदुराणामसुराणाम् । अथ कीदृशानां नाकः, कीदृशानां नरक[4] इति विज्ञातम् ।

मातलिः—अथ किम् ?

यत्स्वैरिण्यधरामृतं परिचितं तेषां सुसाधारणं
[5]तासां [6]कामलता तदङ्गलतिकाद्यैः काममालिङ्गते ।
योषां[7] तत्कठिनस्तनग्रहलता तेषां वदान्यो मणिः
यैरप्यविरतदण्डदेय्यमपि[8] वा तेषां नृपार्धासनम् ॥३८॥

किञ्च,—

ये कृष्णाजिनधारिणस्सुविहिता तेषां महानारवो
तेषां ध्याननिमीलिता अपि दृशस्तेषामथान्धं तमः ।
ये सूत्रार्थविदस्तदेकविहिता सा कालसूत्रस्थितिः
तेषां चेदसि पत्रिका बत [9]गतिर्यन्वासिधाराव्रतम् ॥३९॥

---

१. जिगु०; २. ०द्या०; ३. ०मेदुरामसुरा०; ४. नरकः; ५. तेषां । ६. कमलता; ७. येषां; ८. यैरप्यविरतण्डदीय्यमपि; ९. ०गीत० ।

**महेन्द्रः**—अहो, समुचिता राज्याधिकारपद्धतिः । अथ कीदृशी कर्मदेववधूनामा स्थितिः ?

**मातलिः**—

ननु कर्मफलं भवत्पतीना-
[1]मारतमप्सरसां किल प्रसिद्धम् ।
भवतूपगमः फलं मदीयो
भवतोनामिति दानवप्रसादः ॥४०॥

अपि च—

असुराधिपतिप्रसादलेशैः
असतीषु प्रसभं गतासु हन्त ।
सहते रतिमाशु संविधानात्
सह तैरप्सरसां गणः पटिष्ठैः[2] ॥४१॥

**महेन्द्रः**—अयि मातलि, श्रुतं श्रोतव्यम् । किमुपर्यपि—

कल्पान्तव्यतिषङ्गदोषविचलत्कामोग्रदण्डचप्रथाः[3]
[4]प्रोद्यत्सम्प्रधनप्रचण्डभिदुरप्रौढप्रतापोज्ज्वलैः ।
अद्याहं कलयामि भीतचलितप्रक्षुब्धधूताहत-
क्लान्तश्रान्तपलायितप्रतिहतप्रच्छिन्नभिन्नानरीन् ॥४२॥

( इति विकटं परिक्रामति )

**मातलिः**—( स्वगतम् ) सत्यमयं महाराजः कुपित इव । तदुपशमयिष्याम्यमर्षम् । ( प्रकाशम्[5] ) एवमेवैतत्—

शतकोटिधरे सेना शतकोटिविदारणादिपक्षाः[6] ।
परिधावन्ति रणोन्मत्ता विपक्षा[7] इव पर्वताः ॥४३॥

तथापि, समयप्रतीक्षणमनुवेक्षणीयमरातिषु ।

**महेन्द्रः**—अये, ममापि नाम महेन्द्रस्य विपक्षदारणेषु[8] समयप्रतीक्षणमनुवीक्षणीयमिति व्याकुलयति व्याहृतिः । शृणुष्वेतत्, अलमलम् ।

अनुकूलकालयोगप्रकटन[9]पाकनिकरैररिव्रजेषु ।
किमु समयमपेक्षते मृगेन्द्रः समुदयसंहनने मदाबलानाम् ॥४४॥

---

१. रत०; २. पठिष्ठैः; ३. प्रथा; ४. द्यसम्प्र०; ५. प्रशान्तम्; ६. ०वक्षा । ७. परिधावन्ति विपक्षा०; ८. ०हारणे०; ९. ०कच० ।

**मातलिः**—किं हीयते महाराजस्य विपक्षपाटनीषु ?

यद्दोर्दण्डविमुक्तकाण्डपटलप्रक्षुण्णरक्षोगलत्
प्रत्यग्रक्षरदुष्णशोणितझरीजृम्भज्झरप्लाविता ।
सैषा भूमिरभूतप्रभूतविकटाटोपभ्रमद्भूतराड्[1]
अन्तस्तोषगरुण्डखण्डवलयप्रस्यूतहारप्रदा ॥४५॥

तथापि—नयानयविदादेशकालाभिज्ञेन भगवता सुरदेशिकेन सम्मन्त्र्य यदारभ्यते, तदखिलमपि शुभोदर्कमेव भविष्यत्यायुष्मतो महाराजस्य ।

**महेन्द्रः**—किमत्राप्यालोचनीयमङ्गुलिस्फोटमात्रसुकरविजयेष्वरिसमुदयेषु ।

( ततः प्रविशत्याङ्गिरसः )

**आङ्गिरसः**—अहो, महानद्भुतरसोल्लासो यदेवमतिवलोन्मत्तेषु अभियात्रिसु बलिप्रभृतिषु स्वयमेव महाराजः प्रतिद्वन्द्वमभिलषतीति श्रूयते । ( विचिन्त्य )—

किमु भिन्नरौद्ररसमन्द्रितो जनः
स्वपरान्तरं धृतमवेत्युपक्रमे[2] ।
घनगर्जनश्रवणसम्प्रमोदितः
किमु वेत्ति[3] सिंहशिशुरात्मशैशवम् ॥४६॥

तदेवमुपगम्य सम्यगनुबोधनैराप्याययामि ।

( इति परिक्रामति )

**मातलिः**—आयुष्मन्नयमयं भगवानाङ्गिरसः ।

**महेन्द्रः**—( अनाकर्णितकेन )—

अबलिविरचितावलम्भजृम्भा
अविहितबालविलासचन्द्रमाभ्याम् ।
अकरवमिति मे निशा तैं-
रसुरचमूमविलम्बशम्बया तैः ॥४७॥

**आङ्गिरसः**—अहो, महाराजस्य रुष्टता दृष्टता च । ( प्रकाशम् ) अये, महाराज, क्षम्यताम्, क्षम्यताम्, यदद्य भगवता पितामहेनादिष्टं, तदेव समञ्जसमिति प्रतिभाति ।

**महेन्द्रः**—कथमिव ?

---

१. ०राट् ; २. ०क्रामे ; ३. वेति ।

**आङ्गिरसः**—( उपसृत्य, कर्णे ) एवमिव। ( इति कथयति )

**महेन्द्रः**—भगवन्, केयं विभीषिका रजनीचरा इति यदेवममृतोत्पादनमिषेण जेतव्यतोपदिश्यते।

**आङ्गिरसः**—

प्रभो प्रबोधयामोऽद्य प्रभाससदृशं वयम्।
दुर्वारं मन्महे येन दुर्वासवचनं महत् ॥४८॥

**मातलिः**—आयुष्मन्, अतिलङ्घनीयः परो गुरोरादेशः।

**महेन्द्रः**—( किञ्चिद्विमृश्य )—

असुरेष्वविनीतेषु न सन्धित्सति मानसम्।
तथापि भवतामाज्ञा तरसा संरुणद्धि तत् ॥४९॥

**आङ्गिरसः**—

वयं सन्धिं करिष्यामो वनवासकृशा अपि।
यदि विक्रमसम्पन्ना भवान् पश्यत्यनेहसम् ॥५०॥

**महेन्द्रः**—वयं त्वमर्षणीये, यथा श्रेयः क्रियतां तत्रभवद्भिः।

( नेपथ्ये )

प्रभा पुमाकृतिर्यद्वा प्रबोधो मूर्तिमानयम्।
प्रत्यायाति महाराजं परमर्षिर्हि नारदः ॥५१॥

**आङ्गिरसः**—महाराज, सम्भाव्यतामर्घ्यादिभिर्महर्षिः।

**महेन्द्रः**—तथा।

( इति निष्क्रान्तास्सर्वे )

**॥ इति श्रीवेङ्कयार्यविरचिते महेन्द्रविजयाभिधाने डिमे प्रथमोऽङ्कः ॥**

# अथ द्वितीयोऽङ्कः

( ततः प्रविशतौ मुनिशिष्यौ )

**माण्डव्यः**—अले, शाअलिअ, चिरेणं दितोऽसि ।

( छाया ) [ अरे शाकल्य, चिरेण दृष्टोऽसि । ]

**शाकल्यः**—कथमेषः भार्गवेण गुरुणा धेनुपालने[1] नियुक्तो माण्डव्यो भगवान् ।

**माण्डव्यः**—अह इम ? तुहा कीलिसि गुलोणं अणन्ति ।

( छाया ) [ अथ किम् ? तव कीदृशी गुरूणामाज्ञप्तिः ? ]

**शाकल्यः**—अद्य त्रिचतुर्दिनान्यारभ्य अग्निपरिचरणाय आदिष्टोऽस्मि ।

**माण्डव्यः**—अहिम हें, अग्गिपलिचलणे शीसं णिओजेदुं अहिं अहिं पन्थाणि गुलचणंस ?

( छाया ) [ अहो, अग्निपरिचरणे शिष्यं नियोक्तुं कुत्र प्रस्थानं गुरुजनस्य ? ]

**शाकल्यः**—न हि न हि । केनापि राजकार्येण व्यापृतो भगवान् । अहो, मामादिष्टवानत्र ।

**माण्डव्यः**—

अले, अणवलदलपलिभणाशि भोङ्खु गुलुइं अग्गिहोताणाम् ।
तं विउज्झ[2] अकिरिसंरजंहि अन्तअणुवन्तिठ्ठेहि ॥१॥

( छाया ) [ अरे,
अनवरतपरिचरणशीलः खलु गुरुरग्निहोत्राणाम् ।
तदप्युज्झित्य कीदृशं राज्याधिकारमनुवर्तते ॥१॥ ]

**शाकल्यः**—न खल्वेवम् । अस्ति किल निखिलरेखाशिरःकिरीटमणिघृणि-नीराजितचरणारविन्दः प्रियनन्दनो मुनेरङ्गिरसो विवस्वति वेशिकीजो[3] बृहस्पतिर्नाम ।

---

१. ०पालनेति; २. विउंझ; ३. ०कीज० ।

**माण्डव्यः**—

सुदपुञ्ज एसो गिव्वाणेहिं साअं एव पलाइदो ताणि ।
गुलुन्ति तएणा[1] तसं कीलिसिवसन्ति ।।२।।

(छाया) [ श्रुतपूर्व एषो[2] गीर्वाणैस्साकं पलायितस्तेषाम् ।
गुरुःरति तदानीं तस्य कीदृशी [3]प्रशस्तिरिति ।।२।। ]

**शाकल्यः**—सोऽयं खलु नाममात्रावशिष्ट इति ज्ञायमानोऽपि कदाचिदवलम्बितकृष्णाजिनाम्बरः [4]कुक्षिस्थलस्थगितपुस्तकः जानुदघ्नजटाभारः शनैश्शनैरुपेत्य सुरपुरद्वारं दौवारिकमिदमाह ।

**माण्डव्यः**—[5]किंण्णु खु एदम्[5] ?

( छाया ) [ किन्नु खल्वेतत् ? ]

**शाकल्यः**—भो भो दौवारिक, निवेदयत मामखिललोकहृदयानन्दचन्दनाय भृगुनन्दनाय प्रियगुणाय मुनये—'एप तव भ्राता कनीय्यानागत[6]' इति ।

**माण्डव्यः**—अहमहे, सोहावसन्तुण्णो वितंस ईरिसं मिन्ततंणिति ।

( छाया ) [ अहो, स्वभावशत्रोरपि तस्येदृशं मित्रत्वमिति । ततस्ततः ? ]

**शाकल्यः**—ततस्तैरपि विस्मितैरागत्य अस्माकं गुरवे निवेदितमासीत् ।

**माण्डव्यः**—तदो किंण्णु पलिडिवणं तेहिम् ?

( छाया ) [ ततः किन्नु प्रतिपन्नं तैः ? ]

**शाकल्यः**—[7]ततस्तदागमनश्रवणोदिताद्भुतानन्दतुन्दिलस्तूर्णमस्मन्मुखेनैव दैत्यराजाय बलये निवेद्य, सद्य एव [8]तत्प्रतिहतदूतसहितो गोपुरं पुरस्यासाद्य ह्यद्य फलमेतत्कीदृशं[9], वा न विद्मः ।

**माण्डव्यः**—जाणादंजंसं तुणेमिं तन्तणंसतं··· ··· ····· ?

( छाया ) [ ························ ततस्ततः ?

**शाकल्यः**—ततश्च गुरुस्तदागमजनितसमुत्पन्नकुतूहलारूढहर्षोत्फुल्लनयनोऽमराणां प्रशस्ततरकुसुमविशेषभूषणं धिषणमालिङ्ग्य समुचितोपचारतोषितमेनमानीय्य गृहमेवमवादीत्—

---

१ एणां; २. एषः; ३. प्रसत्तिः०; ४. कक्षस्थल०; ५. किण्णुएदम् ।
६. कनीय्यो; ७. ०स्तमगमश्रव०; ८. तत्प्रहित०; ९. ०शम् ।

यदभवत्किल हुवन्तं ध्यातमिष्टं च तप्तं
तदखिलफलमाप्तं तावकीनोपयानम् ।
अतितरसुलभत्वादप्रतर्क्या नु हीनाः
प्रायस्त एव सुगुणाप्रणयोपयोगे ।। ३ ।।

अन्यच्च—

यैरेव भीषयति पान्थजनं हिमांशुः ।
तैरेव शोषयति किन्तु परैः प्रियाप्ताः ।। ४ ।।

**माण्डव्यः**—कीरिसो उपाहिम् ? कीलिसो परिहालेवि ?

( छाया ) [ कीदृशी[1] उपाधिः ? कीदृशः परिहारोऽपि ? ]

**शाकल्यः**—

दितिरदितिरिति क्षितिः[2] प्रतीते-
दयित न मे किल काश्यपस्य भूम्नः ।
उभयमजनि यत्कुलं कविश्चेत्
प्रभवति तस्य कुतस्तदेकवासः ।। ५ ।।

दायादाः काश्यपस्येमे दैत्यदानवनिर्जराः ।
कदाचित्कलहायन्ते क्वचिन्मैत्रीं[3] च कुर्वते ।। ६ ।।

तदेतस्य पक्षद्वयस्य यादृशी समवस्था, तादृश्येव तदाचार्ययोश्च ।

**माण्डव्यः**—तदो किण्णु खु भणीदे आङ्गिरसेणा ?

( छाया ) [ ततः किन्नु खलु भणितमाङ्गिरसेन ? ]

**शाकल्यः**—उक्तञ्चैतदतिशयितसम्मतान्तरेण सुरदेशिकेन । क एवोपचारः क्रियते ?

आवयोरुपचारश्चेदमरो भृगुजन्मनोः ।
स किं पितामहो[4] न स्यात्सहासमुखपङ्कजः ।।७।। इति ।

**माण्डव्यः**—अहमहे महुरदा व अणोवण्णासंस । तदो ?

( छाया ) [ अहो, मधुरता वचनोपन्यासस्य । ततः ? ]

**शाकल्यः**—ततश्चानुयुक्तो भृगुनन्दनेन तमुवाच वाचस्पतिः—'भगवन्निदमेव कारणमागतस्य—

अनुचिन्त्य विषमसर्गान्[5] मनसः क्षोभं ततश्च भवव्यथाम्[6] ।
[7]भवदीयसविधलब्धाद्[8]भाविताज्ञानाद्विरागमिति सम्पत्[9] ।।८।।

---

१. कीदृश; २. क्षि; ३. मैत्रं; ४. ० पितामहेन; ५. ० सगान् । ६. भवथाम्; ७. ०सीवध०; ८. भविता०; ९. विरागसम्पद् इति ।

**माण्डव्यः**—अवि णादुएदं पलमन्धविअ मण्णिदि भअवंताओ ?

( छाया ) [ अपि नामैतत्परमार्थं मन्यन्ते भगवन्तः ? ]

**शाकल्यः**—अथ किम् ?

ताम्राकृतिं तदुचितं च सुधारसार्द्रं
तान्यार्जवप्रणयसूचकलक्षणानि ।
उद्वीक्ष्य तादृशमनोज्ञगुणावदात-
प्रत्यायनामिव[1] अदादिह[2] देशिकेन्द्रः ॥९॥

**माण्डव्यः**—अविणावइदो वलक्कोवि विसेसो विह विसदिन्ति जाणासि ?

( छाया ) [ अपि नाम इतो वलत्कोऽपि विशेषोऽपीह विषिन्वतीति जानासि ? ]

**शाकल्यः**—अथ किम् ?

**माण्डव्यः**—किंति ?

( छाया ) [ किमिति ? ]

**शाकल्यः**—( कर्णे ) एवम् ।

**माण्डव्यः**—( सहर्षम् ) तह जदि संवंवि सुहोदरकं हविसदि ।

( छाया ) [ तथा यदि सर्वमपि शुभोदर्कं भविष्यति । ] ( **संस्कृतमाश्रित्य** )--

सुरासुरस्नेहरसोदयेन
सुखं भवत्येव तदाश्रितानाम् ।
सुधामपि प्राप्य जहोमरमणीं[3]
उभौ च वंशावुदितौ भवेताम् ॥१०॥

अह कहं पंधितोऽसि ?

( छाया ) [ अथ कुत्र प्रस्थितोऽसि ? ]

**शाण्डिल्यः**—महाराजवलेस्सविधगतं भगवन्तं भार्गवमेवोपगच्छामि, त्वमपि नियोगमशून्यं कुरु ।

**माण्डव्यः**—तथा ।

( इति निष्क्रान्तौ )

॥ अत्र मिश्रविष्कम्भः ॥

---

१. ०दिव; २. मदाशर०; ३. जहिमरम्नी ।

( ततः प्रविशति बलिर्भार्गवश्च )

भार्गवः—महाराज[1],

या वा हिरण्यकशिपौ या च विपक्षक्षतौ हिरण्याक्षे।
अवतामद्य कव [2]कवलयति ते तरुणारुणभासुरा पराक्रान्तिः ॥११॥

अपि च—

बलिमाह ते यतस्त्रिलोकी
बलिना केनचिदप्ययोधिनैव।
बलिना तव सार्थकतेति[3] अन्ये
बलिभुग्जालमकारि यत्सुरौघम् ॥१२॥

मातलिः—भगवन्, भवद्भिस्सहायैः किं किं न कारिता वयम् ?

सिद्धा वीरैर्निषिद्धा रणभुवि चकिता किन्नराः खिन्नरूपा
यक्षाश्च क्षेमलक्षाः कृततृणकणिकाधारणाश्चारणाश्च।
गन्धर्वा वीतगर्वा दिशि दिशि विधुरा यान्ति नागाः नागा
मदबाणैरिन्द्रतेजःप्रशमननिपुणैः छिन्नभिन्नाङ्गयानाः ॥१३॥

भार्गवः—महाराज[4], किन्तु सावशेषमिव व्याकुलीकरोति ते वचः।

बलिः—भ्रष्टश्रियोऽपि जीवमात्रावशिष्टाः पलायिताः सपत्ना इति केवल-
माकुलोऽस्मि।

भार्गवः—महाराज, अस्त्येतत्।

बलिः—

सर्वेषामपि यूयमेव सपत्नशेषो न सोढव्यः।
तदत्र उपायश्चिन्त्यतामनवरोधप्रसरप्रबोधवद्भिरत्रभवद्भिः ॥१४॥

भार्गवः—

द्वयमेव शत्रुशेषव्यपनयने हेतुरिति वयं भणामः[5]।
यत्सन्धानमिषूणां सन्धानं वा बलाबलविचारात्। १५॥

बलिः—आः, कथममी जीर्णपर्णसदृशास्त्रिदशा अप्यनुसन्धेयाः ?

---

१. महाज; २. कबक०; ३. सार्थथेति; ४. महाज; ५. भामः।

यदग्रकरसम्भृतभ्रमितशम्बधाराचल-
प्रपातपरिचूर्णिता धुरि पलायिताः पर्वताः ।
स एष [1]पतितोऽत्र सविस्मृतचरालिकं भोशर-
मकीर्णनयनं ययाविति महानहो व्युत्क्रमः ॥१६॥

( शस्त्रमभिलक्ष्य ) अये शस्त्र —

यस्य प्रोद्यन्मदश्रोविहरणलहरी दिग्धदिग्दन्तिमूर्ध्न-
द्वैधीभावप्ररूढक्षतजरसमिषव्यक्तविक्रान्तपङ्क्तेः ।
कम्पं कम्पन्नशेषान्मदित बत सती त्वय्यपि क्षेमदक्षे
तस्मिन्नाकस्मिकीयं कथमनुवदतां सन्धिमथ्नीकृता धीः ॥१७॥

**भार्गवः** —एवमेतत् । तथापि देशकालविभागज्ञेन राज्ञा भवितव्यम् ।

अनेहसाऽनुकूलेन[2] प्रयुक्तं[3] फलति स्वयम् ।
क्षितौ बीजमिव न्यस्तं उपायानां चतुष्टयम् ॥१८॥

अत एव सम्यगनुचिन्त्यतां समयोचितम् ।

**बलिः** —कीदृगेतत् ?

**भार्गवः** —अस्ति किल किंवदन्ती[4] या खलु कान्दिशीकैर्वृन्दारकैररविन्दभवं[5] पुरस्कृत्य दैत्यारिसविधमुपागतैरभ्यभाणि वृत्तान्त इति ।

**बलिः** —ततः किं प्रतिपन्नम् ?

**भार्गवः** —तेन च दुर्वाससः [6]कृतशापकृतविक्रमापनोदव्यपनोदनाय सुधारसानयनमवश्यं करणीयमिति आदिष्टमिति श्रूयते ।

**बलिः**—कथं जनिष्यति सुधारसः ?

**भार्गवः** —

कलशाम्बुनिधौ शैलोन्मथनेन सुधा भवेत् ।
यथा निर्मन्थनेच्छास्ते प्रभवेदसमो रसः ॥१९॥

**बलिः** —अथ को वा प्रयत्नः ? गुणस्तस्य विदितः ।

**भार्गवः**—अथ किम् ?

यस्मिन्नसाधारणसारसेन[7]
पश्येन्न जन्तोर्न जरा न नाशः ।
यस्मिन्नकस्मादपि सेव्यमाने
तृप्तिर्यथा सत्कविवाच्यया[8] स्यात् ॥२०॥

---

१. पतिता०; २. ०हसानुकू०; ३. प्रयुक्तं प्रयुक्तं; ४. किंवति ।
५. ०रकै०; ६. दूर्वासकृत०; ७. ०सारसं; ८. सत्कलिवाचया ।

बलिः—अहो, महेन्द्रनाम्नो[1] वराकस्य गूढन्नोऽथज्योतिः[2] कमपि देशिकमुखेन ज्ञातुं ( देवं पराजयितुं ) विजयप्रयत्नमाविष्करोति ?

भार्गवः—अथ किम् ? तथापि ( कर्णे ) एवमेवम् । ( इति कथयति )

बलिः—( सविमर्शम् ) अयमेव सुगमः पन्थाः । यद्रोचते भृगुवंशललामाय भगवते ।

तुल्यप्रयत्नभाजोऽपि तुल्यश्रवणतायुजः ।
फलं भवति[3] यद्दैवाः पलायनपरायणाः ॥२१॥

अथ कुत्र वा वर्तन्ते विमताः, केन वा सन्धेयाः ?

भार्गवः—

अयमाङ्गिरसस्सम्यग् [4]आदृतस्तान् विकर्षति ।
प्रहितो लुब्धकेनैव परं परमृगो मृगान् ॥२२॥

बलिः—भगवन्, अनेन तीर्थेन सफलप्रयत्नेषु भवितव्यमस्माभिः । तथापि—

विपक्षो न विश्वसनीयोऽयमिति मे मतिः ।
तस्य सत्यमेवमपि यथान्यो न वेत्ति तत् ॥२३॥

तथा यतितव्यमस्माभिः ।

भार्गवः—

गुर्वर्थसंहितो वा गूढः फलवत्त्वमेति खलु मन्त्रः ।
अनुकूल एव नः[5] स्यादघटनघटनापटीयसा विधिना ॥२४॥

बलिः—भवद्भिरेवानुमीयतामानीयतां वाचस्पतिः ।

भार्गवः—तथा ।

( इति निष्क्रम्याङ्गिरसेन सह प्रविशति )

आङ्गिरसः—

चिरेण फलितमस्मदीयसुकृतैर्यदेष भूषणम् ।
प्रह्लादकुलस्य पुरो दृश्यते वैरोचनिर्महाराजः ॥२५॥

किन्तु विरक्तदशायामेतदपि न रोचतेऽस्मभ्यम् । तथापि[6]—

अन्यन्न रोचते तस्मै यस्यान्यदभिवाञ्छितम् ।
न मेरूपरि पान्थाय सुमेरोरिव तस्य वै ॥२६॥

---

१. महेन्द्रः; २. ०नोध०; ३. भवन्ति; ४. ०म्यगादृत०; ५. न ।
६. तथा हि ।

**भार्गवः**—यथाह भगवान्, तथापि पापकर्शनमामनन्ति सन्तः प्रभूणाम्। यदाहुरार्याः—

अग्निजित्कपिला साध्वी राजा भिक्षुर्महोदधिः।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येद् नित्यशः ॥२७॥ इति।

**आङ्गिरसः**—अथ किम्? किमेष राजमात्रस्त्रिलोकीसमर्हणार्हमहिमा सत्यं पराक्रमश्चक्रवर्ती दैत्यदानवानाम्।

**भार्गवः**—भगवन्, अयमिह प्रतिपालयति भवदीयकृपावीक्षणं महाराजः।

अनुसरन्ति यदीयदृगञ्चलं
निखिललोकविलोकनिवासिनः।
अयमिमं प्रतिपालयतीति चेद्
अतितरामिह धन्यतमा वयम् ॥२८॥

[1]एष महाराजः।

( इति निर्दिशति ) ( उपसर्पतः )

**बलिः**—अहो, महाननुग्रहः सहजकृपावहानां महतामाचार्याणां, यदि तमुपसर्पंति निरतिशयकृपामहिम्ना। इति।

( इति सत्वरमुपसृत्य पादयोः पतति )

**भार्गवः**—ननु गृह्यतामेष भवदन्तेवासिसार्वभौमः।

**आङ्गिरसः**—किमाशास्यम्?

पलायितश्शत्रुरमर्षणो भवान्
अलायि कुत्रापि सुरैरथातुरैः।
प्रबुध्यते स्वार्जितविष्टपत्रयं[2]
नयेन येनैव वशीकृताशयम् ॥२९॥

तथाप्यपूर्वसम्पदस्तु।

**बलिः**—अनुगृहीतोऽस्मि, यदद्यौघफणितयो भगवन्तः।

**भार्गवः**—यदर्थोऽयमेतेषां समागमस्तद्विज्ञाप्यताम्।

**बलिः**—अपि कुशलं सहसादरस्य पुरन्दरस्य?

**आङ्गिरसः**—यदा रणादपक्रान्तस्तदैव परित्यक्तोऽस्माभिरयशोऽङ्कित इति। यतः—

---

१. भार्गवः;  २. ०विष०।

प्रभुः कुर्यादभिज्ञस्य प्रभुर्विष्णुनिषेवणम् ।
अलम्मन्यैः प्रभुम्मन्यैः अबोधोपहतान्तरैः ॥३०॥

ततश्च निष्कण्टकसमाधिमार्गपथि ईशस्य भगवतो भार्गवस्य मुनेस्सकाशे [1]ज्यायस्सदृशस्संवास इत्युपशान्तमनसा मया स्वयमेवासादितोऽयमुद्देशः ।

**बलिः**—उचितश्चायमाङ्गिरसस्य विरागो नाम, तथाप्यस्मदुद्देशेन किञ्चित्कार्यमवलम्बनीयमत्रभवद्भिः ।

[2]अन्योऽन्यसङ्घर्षणभूरमष-
वह्निः[3] कथं शाम्यति सोदराणाम् ।
अस्माकमासेचनकैर्भवद्भि-
र्घनैर्विना वेणुभुवो यथाग्निः ॥३१॥

**भार्गवः**—किमेतद्विज्ञाप्यमेतेषाम्, भगवन्नाङ्गिरस,

अहं तव सुहृत्त्वेति[4] त्वमित्याचारो न चावयोः ।
कश्श्रोतास्ति वा वक्ता यदहं त्वं भगवानहम्[5] ॥३२॥

**आङ्गिरसः**—( स्वगतम् ) अहो, किमनुसंहितैषिणा विधिना, यत्किल त्रैलोक्यवतो भार्गवस्यापि भगवन्मायामोहिततयाऽन्धीभूतं[6] विमर्शचक्षुः, यच्चैवं[7] बलिप्रमुखानां बलवतामपि स्वयमेव सन्धिमिच्छति मतिः । ( प्रकाशम् )—

किं करोम्यद्य वैराग्यप्रवणं मनसस्समाधातुम् ।
यतः परवानस्मि सुधारसमुचा वाचा भ्रातृचरणानाम् ॥३३॥

**भार्गवः**—

चिरविरोधिसुरासुरमण्डली,
विहितमैत्रितया यदवाप्स्यते ।
विषयभोगविरागतया तव
तदनवाप्यमितीव मतिर्मम ॥३४॥

**बलिः**—न किञ्चिद्विज्ञाप्यम् । विदितवेदितव्यानां स्वभावशत्रुतया तेषामावर्जने कश्चिदुपायश्चिन्तनीयः ।

**भार्गवः**—अस्ति कश्चित् । ( कर्णे ) एवमेव ।

**आङ्गिरसः**—( सहर्षम् ) युज्यत एतत् । सत्यमेवमसुलभे वस्तुनि न्यस्तहृदयतया सहायमपेक्ष्यन्ते दिविषदः दुर्बलाश्च बलारातिप्रभृतयः

---

१. ज्यायस्सदृश०; २. अन्योन्य०; ३. वन्वीः; ४. ०न्नेत्व० ।
५. ०भवानहम्; ६. ०तयान्धी०; ७. ०चेवं ।

शापेन दुर्वाससो महानयमुपक्रमश्च कार्यस्य। अतो यथामति[1] यतिष्यामः।

**बलिः—**

वयं काश्यपदायादाः स्वभावभृतसहृदाः[2]।
युवयोरेव तुल्यत्वमितीह विधिना जितम् ॥३५॥

तद्गम्यतामुभयकुल[3]कुशलाय।

**आङ्गिरसः**——तथा।

( इति निष्क्रान्तः )

**बलिः**——अपि नामैतदाङ्गिरसस्य वचो बहु मन्यन्ते महेन्द्रादयः?

**भार्गवः**—अथ किम्? भगवदादिष्टस्य अवश्यम्भावित्वादशक्तेरप्यात्मनामनुकूलमेव साहाय्यकं मन्वानः[4] क्षिप्रमायास्यत्येव आङ्गिरसः[5]।

[ततः प्रविशति आङ्गिरसः]

**बलिः**— अमृतलाभकृते स सहायतां
अभिलषेदिति यद्यपि निश्चयः।
सहजशत्रुरमर्षण इत्यलं
न हृदयं धृतिमेति मम त्विति ॥३६॥

**भार्गवः**— न खल्वेवमाशङ्कनीयम्,

अमर्षणो विकार्यार्थमतिशान्तिमुपैति सः।
मणिमन्त्रक्रियारुद्धो महाहिरिव साधुताम् ॥३७॥

तदप्यमृतमस्माकमेव यथा सिध्यति, न च तेषां, तथा यतितव्यम्।

**आङ्गिरसः**—कियानयं यत्नः कीटकूटावशेषत्रिदशेषु।

( इति परिक्रामतः )

[ नेपथ्ये ]

**एषामीषदपि प्रसङ्गवशतो नामापि न श्रूयते**
**यैरावासदशावृतानि मनसामस्पृश्यरूपे पदे।**
**तैरेवाद्भुतसङ्क्रमाभिपतनेनाराधितो दैवतै-**
**राचार्यस्स्वयमेति मानससुतैरर्च्यं[6]स्वयम्भूरिव ॥३८॥**

---

१. यथावति; २. ०सहृदाः; ३. ०कूल०; ४. मन्वानाः; ५. बलिः। ६. ०सुतैरप्य०।

( उभौ साश्चर्यमालोकयतः )

**बलिः**—कः कोऽत्र भोः !

( प्रविश्य, प्रतिहारी )

**प्रतिहारी**—आणवेदु भट्टा ।

( छाया ) [ आज्ञापयतु भर्ता । ]

**बलिः**—

कुन्तैर्दिग्दन्तिदन्ताः कुलिशशतमुखैरनन्तो[1]ऽलङ्क्रियन्तां
पल्याणान्यर्पयन्तु प्रथितहयगणे कल्पकल्याणभाजि ।
दैत्या नित्यावदातैरपि[2] गगनतलस्यन्दनैराक्रमन्ताद्[3]
दिग्पालाः कारणाय प्रथममभिमतैर्मन्दुभिस्ताड्यताञ्च ।। ३९ ।।

आदिश्यताञ्च, विरोचन-विप्रचित्ति-बाण-नमुचि-कालनेमि-जम्भ-प्रमुखदैत्यदानवयोद्धारश्च सन्नह्यतामिति ।

**भार्गवः**—महाराज, चिरेणावलोकिता इव सुकृतसुहृदा भवताप्यनभिव्यक्ताशयेन सभाजयितव्याः सर्वे सुपर्वाणः ।

**बलिः**—यथाज्ञापयन्ति गुरवः ।

( इति निष्क्रान्तास्सर्वे )

**।। इति श्रीवेङ्कय्यार्यविरचिते महेन्द्रविजयाभिधाने डिमे द्वितीयोऽङ्कः ।।**



---

१. अन्ततो०; २. ०दाते०; ३. ०क्रमन् आ० ।

# अथ तृतीयोऽङ्कः

( नेपथ्ये )

इत इतः ।

( ततः प्रविशति वारुणः )

**वारुणः**—आणत्तम्हि महालाअ वलुणेण जह गम्म महालाअ महेन्दंस सआसं हाहलेणे किणु विलम्बि अदिन्ति विजाणेअआ अंभान्ति । दाणिं वञ्जअमङ्गं मादली मं आकलेदि होदु णं पुञ्छरिस ।

( छाया ) [ आदिष्टोऽस्मि महाराजवरुणेन, यथा—'गच्छ महाराजमहेन्द्रस्य सकाशं सुधाहरणे किं विलम्ब्यत इति विज्ञायागच्छ' इति । इदानी मध्येमार्गं मातलिर्मामाकारयति । भवत्वेनं पृच्छामि । ]

( इति परिक्रामति )

( प्रविश्य, मातलिः )

**मातलिः**—आदिष्टोऽस्मि महाराजमहेन्द्रेण, यथा—"प्रियसुहृदं मे प्राचेतसं, ब्रूहि मद्वचनेन—

यन्मन्त्रतानुसरणं यदरातिजाति-
निष्पीडनैकफलमानसकीर्तनद्वयम्[1] ।
यत्स्वानुभूतिसदृशं यदकीर्तिहारि
तद्योज्यतामसृतलब्धिसहायतायाः ॥ १ ॥

इति । तदेनं पृच्छामीति वारिको वा वर्तते वारुणः ।

( इत्युपसर्पति )

**वारुणः**—अयि मादले, कहिं पत्थिदोसि ?

( छाया ) [ अयि मातले,क्व प्रस्थितोऽसि ? ]

**मातलिः**—भवत्स्वामिन एवोपान्तम् ।

**वारुणः**—कुकीस तंस उवन्दगमणम् ?

( छाया ) [ कस्मात्तस्योपान्तगमनम् ? ]

---

१. ०मानससंकीर्तनै० ।

**मातलिः**—( कर्णे ) एवमिति ।

**वारुणः**—( प्रविहस्य )[1]—

किन्ति एसा आसङ्कासाहिणं सुजेणेसु ।
अन्तणो कज्जं एंववदं अद अह्माणि सामिणोवि ॥ २ ॥

( छाया ) [ किमित्येषा आशङ्का[2] स्वाधीनेषु जनेषु ।
आत्मनः कार्यमेवैतद् अस्माकं स्वामिनोऽपि ॥ २ ॥ ]

अह कहं महालाअ महेन्दो वट्टिरि ?

( छाया ) [ अथ कुत्र महाराजमहेन्द्रो वर्तते ? ]

**मातलिः**—अमरावत्याम् ।

**वारुणः**—( साश्चर्यम् ) अये, किण्णु एवं असंबंधं अलवेसि । अज्जवि कुदो आसेसासुलाणां अमलावदी विजाखु अदि में तं बलवन्तेहिं बलि पमुहेहिम भङ्कदन्तणे णमिआहवाहिं ठिदं विअवणं गजेहिं विह्मराणि[3] अकहमसग् ।

( छाया ) [ अये, किन्त्वेवमसम्बद्धमालपसि ? अद्यापि कुत अशेषासुराणाममरावत्यां या खल्वतिमात्रं बलवद्भिर्बलिप्रमुखैराक्रान्तत्वेन मृगाधिपाधिष्ठितमिव वनं गजैर्विस्मरणीयकथा संवृत्ता ।

**मातलिः**—इदानीमन्यथैव वर्तते संविधानम् ।

**वारुणः**—कहं विअ ?

( छाया ) [ कथमिव ? ]

**मातलिः**—अनुसंहिताश्च सीदन्तोऽवज्ञाप्रसङ्गेन भगवतैवाङ्गिरसेन देवासुराः सम्भूय बलिमेवानुसृत्य वर्तन्ते ।

**वारुणः**—एदं विअपकलसो एवं सुलाणाम् ।

( छाया ) [ एतदप्यपकर्षण एव सुराणाम् । ]

**मातलिः**—( विहस्य कर्णे ) एवमिव ।

**वारुणः**—तह जदि सव्वं विजुज्जइजं विलोहिणी विपदलम्वेण एवं दीहीरणन्ति । अहवा किण्णु खु कज्जं दाणवाणं बलवन्ताणं सन्धाणेण सुलेसु ।

---

१. पाविहस्य; २. आतंसका; ३. ०रणि; ४. मोदतो० ।

( छाया ) [ तथा यदि सर्वं युज्यते, यद्विरोधिनां विप्रलम्भेनैवावधीरणमिति[१]। अथवा किं नु खलु कार्यं दानवानां बलवतां सन्धानेन सुरेषु । ]

**मातलिः**—नैरप्यमृतलाभमेवोद्दिश्याप्येकपत्यमपेक्षितमेतैः[२] ।

**वारुणः**—दाणीम् कन्ति अवहि ओकलसम्बुलासिमहणप्पयंतणो वण्टइ ।

( छाया ) [ इदानीं कियदवधिकः कलशाम्बुराशिमथनप्रयत्नो वर्तते । ]

**मातलिः**—यावन्मन्दरानयनम्[३] ।

**वारुणः**—अहमहे, मन्दलाण अणति अंचरिअम् । केण[४] उण आणिदो कुलपंवदो ?

( छाया ) [ अहो, मन्दरानयनमित्याश्चर्यम् । केन पुरा नीतः कुलपर्वतः ? ]

**मातलिः**—कः पुनरन्यस्साक्षादृते भगवन्तं पुरुषोत्तममेतदानयने[५]दाक्ष्यमवलम्ब्यते ।

**वारुणः**—सेवि महांवो कहिं आअम्भदि ?

( छाया ) [ सोऽपि महान् कथमागच्छति ? ]

**मातलिः**—मैवं वादीः । पश्य —

**भक्तानुकम्पितहृदा परिपालनैक-**
**सक्तेन तेन निपुणं [६]किमकारितान्यत् ।**
**अस्मिन्न तारणकृतोपकृतिः प्रचारे**
**तस्मिन्नरण्यनिकटे गज एव साक्षी ॥३॥**

**वारुणः**—होदु अहां महालाअ महेन्दं स सन्देश गच्छेमि । तुमं विशेदेन असुणं करेहि ।

( छाया ) [ भवत्वहं महाराजमहेन्द्रस्य सन्देशं गच्छामि । त्वमपि सन्देशमशून्यं कुरु । ]

**( इति निष्क्रान्तौ )**

**॥ अत्र मिश्रविष्कम्भकः ॥**

**( ततः प्रविशति महेन्द्रः )**

**महेन्द्रः**—कथमयं भगवान् आङ्गिरसः ?

---

१. ०धीतनोमि; २. ०श्य अएकपत्य०; ३. यावन्दरानयनम्; ४. तेण; ५. ०दानयते; ६. किमु० ।

( ततः प्रविशत्याङ्गिरसः )

आङ्गिरसः—अहो, आश्चर्यमाश्चर्यम् ।

यस्मिन्नक्षिपथं गते कुलधराः गण्डोपलश्रीधराः
येनैव प्रतिमानदानमुपमो[1] मेरुः प्रमाणातिगः ।
यं कैलासकृतालयोऽपि कुरुते केली महीध्रं शिवः
तञ्चैकेन करेण सम्भृतरवः कोऽयं हरेर्विक्रमः ॥४॥

( पुरोऽवलोक्य[2] )—कथमत्रैव महाराजः ।

( इत्युपसर्पति[3] )

महेन्द्रः—किमिह मन्त्रयमाण इव [4]तत्रभवान् ?

आङ्गिरसः—( सशिरःकम्पम् ) यस्मिन्नक्षिपथमित्यादि पुनः पठति ।

महेन्द्रः—सर्वमप्याचार्यप्रसक्तिः, किन्तु ·· ··· ?

आङ्गिरसः[5]—किमेतत्सावशेषमिव ते वचः ?

महेन्द्रः—अस्त्येतत् । श्रूयताम्—

यस्याज्ञा [6]हरशीशमञ्जुमुकुटालङ्कारहारायते
यस्मिन्नेव जगत्प्रपालनकलावैदग्ध्यपारीणता ।
यस्मै वायुधमद्रिकूटदलनप्रख्यातमेतादृशः
क्रुद्धोऽपि प्रणयप्रसङ्गवशगो वर्तेत सङ्क्रन्दनः ॥५॥

तदद्यैव खड्गधाराव्याजेन[7] विजयलक्ष्मीमानेष्यामि ।

( इति विकटं परिक्रामति )

आङ्गिरसः—राजन्, नायममर्षोचितस्समयः ।

मथिते क्षीरवाराशौ मन्थरेण महीभृता ।
सुरेतरजयाद्भूयाः[8] सुधास्वादनमांसलः ॥६॥

महेन्द्रः—आः, कथं मानधनोऽप्यहितेषु प्रह्वतामावहते ?

अवेक्ष्यमाणैरनुरूपमानं
क्व मृष्यते शत्रुजनानुरोधाः ।
कृशा अपि ग्रासविलोपहेतोः
कथं मृगेन्द्राः कठिनं श्रयन्ते ॥७॥

---

१. ०दाननुपमो; २. पुरो विलोक्य; ३. इत्यपसर्पति, ४. तत्तत्र० । ५ आङ्गिरः; ६. हरकीशमञ्जुमुकुटा०; ७. ०धारोपधेनं; ८. ०जया भूयाः ।

**आङ्गिरसः**[1] —

यदुपायबलेन साध्यते तद्
अलभ्यं किल किन्तु विक्रमैः ।
इदमाश्रयतां यथाम्बुधिः
तरणीयो न तथा भुजोद्यमैः ॥८॥

अत एवानुकूलदैवेन छद्मना जेतव्यः सपत्नसम्पदः ।

**महेन्द्रः** —इदमपि लज्जायै मानवतां यदनभियोगमूलेन छद्मना समर्थनमर्थानामिति । ( हृदयमालोक्य ) अये क्रोध —

यैरेवाचरितं तपस्विविकटोत्क्रो[2]धोदितप्रक्रिया
संरुद्धः स्वबलानुकूलविहिताचारो हि देशादृते ।
मय्यारम्भगलन्मनस्यतितरामारूढदर्पोदयै-
र्दैतेयैर्भृशमप्रियं तदधुना स्मृत्वाऽपि[3] नो लज्जसे ॥९॥

**आङ्गिरसः** —( स्वगतम् ) अहो, कियानमर्षः सुपर्वेशितुः । ( प्रकाशम् ) —

समयसङ्क्रमितप्रणयक्रमः
फलमुपैत्यनपायि[4]पराक्रमः ।
फलति बीजमनेहसमाश्रितं[5]
भुवि यथा न तथा समयोज्झितम् ॥१०॥

**महेन्द्रः** —( अनाकर्णितकेन ) अयि निरुद्धहृदय, निरुद्धोऽसि गुरुवचनार्गलेन —

यावदुग्धपयोनिधानमनमत्प्रोद्यत्सुधापारण-
व्याप्तामद्य बलावलेपपृतनासम्मर्ददुर्दान्तराः ।
तावन्मर्षय तादृगुन्मदरिपुः प्राप्ताभिभूतिक्रमः
स्फण्णामर्षक्षुरोदरप्रपदनश्रान्तिं नितान्तोदिता ॥११॥

( नेपथ्ये )

यावद् भ्रमन्ति मदहस्तिकरावधूत-
चूतप्रसूनविटपच्यवनाद् द्विरेफाः[6] ।
तावन्मरन्दरसपूरपरम्परार्द्र-
मानन्ददायि कमलं समलम्भि तूर्णम् ॥१२॥

---

१. अङ्गिरोऽपि; २. ०विकटोक्रो०; ३. त्वापि; ४. ०मुपेत्य० । ५. ०नेहमाश्रितं; ६. ०द्विरेफात् ।

भार्गवः—अनया सुखोपश्रुत्या सत्यापेतमनोरथास्स्मः ।

( पुनर्नेपथ्ये )

निष्प्रत्यूहहविप्रतापनविधिप्रत्यायनाङ्गीकृत-
क्षोणीभृद्गुणभाववासुकिशिरो बालावलम्बोत्कटैः ।
प्रक्रान्तो मथनक्रमो जलनिधेरब्जाक्षवीक्ष्या सुधा-
संसिक्ताङ्गतरङ्गितोज्ज्वलबलाविष्टम्भजृम्भैर्जटैः ॥१३॥

महेन्द्रः—( सहर्षम् ) कथमुपक्रान्त एव कलशाब्धिमथनप्रयत्नः ? तदिदानीम्—'यत्र भार्गवसखा बलिप्रमुखा विततं मुखावस्थायिभिर्भवितव्यमस्माभिरपि ।

आङ्गिरसः—तथा ।

( इत्युभौ परिक्रामतः )

( ततः प्रविशति भार्गवेन सह बलिः )

बलिः—अहो, आश्चर्यमेतत् ।

मन्थानं कुलभूधरस्मरहरप्रेमप्रभावोन्नतो
रज्जुर्वासुकिरप्यनर्गलधराभारोद्वहाडम्बरः ।
पात्रं चेत्कलशाम्बुधिर्न वचसां पात्रं यदीयस्थितिः
कं कं वा न विधिं करोत्यभिमुखं श्रेयोऽनुकूले विधिः ॥१४॥

भार्गवः—सत्यमेतत्, तत्रापि महाराजमेव स्पृशतितरां विधेः प्रसादोऽपि ।

आराधितो हरिरकुण्ठितभक्तियोगाद्
आलम्बनं त्रिजगताममरैरिवारात् ।
तेषु स्थितेष्वपि फलानुभवप्रसक्ता-
वालम्बते जयवनोपचितश्रियै वः ॥१५॥

बलिः—सर्वमप्याचार्यप्रसाद एव, यथाकथञ्चिमृदताहरणलोलुपं मनस्तरलयत्यात्मानम्[1] ।

भार्गवः—कोऽयं विष्टपोऽत्रापि [2] ?

अमृतं भावितं नूनमसुरारेर्निदेशतः ।
बलित्वाद्भवतामेतद् भविष्यति वशं पदम् ॥१६॥

( इत्युभौ परिक्रामतः )

महेन्द्रः—भगवन्नाङ्गिरस, भवता भार्गवेण सह मन्त्रयमाणः किमाप्याययति वैरोचनिः ?

---

१. ०स्तलयत्या०; २. विषयोऽत्रापि ।

**आङ्गिरसः**—महाराज, तूर्णमाच्छाद्य प्रतिघा उपस्थातव्यः प्रबलः परिपन्थिः।

**महेन्द्रः**—किं किं न कारयत्याचार्याज्ञप्तिः ?

( इत्युपसर्पतः[1] )

**भार्गवः**—यथा न जानात्येष[2] मनोगतं तथा यतितव्यम्।

**बलिः**—यथाज्ञापयति अत्रभवान्। ( उच्चैः ) अये भ्रातः, इत इतः।

**महेन्द्रः**—( सानुरागाभिनयम् ) किमाज्ञापयत्याचार्याः ?

**बलिः**—आसन्नश्च कलशाब्धिमथनप्रयत्नः। किं विलम्ब्यते ?

**महेन्द्रः**—यावदाचार्यागमनमेव, भार्गवाङ्गिरसौ।

इयमपि सकृदुक्ता भ्रातरार्येति वाणी
श्रवणचुलकपेयं दोग्धु पीयूषमेषाम्।
अलमलमनुकूलभ्रातृसौहार्द्रवाचा-
ममृतमिति कियत्स्यादग्रतो वा न विद्मः ॥१७॥

किञ्च—

यत्काश्यपस्य यमिनस्तपसोऽनुरूपं
यच्चावयोरपि मनोरथसिद्धिसाध्यम्।
यद्देवदैत्यकुशलानुभवैकमूलं
तत्सौहृदं समजनीति जितं विधात्रा ॥१८॥

**बलिमहेन्द्रौ**—सर्वमपि युष्मत्कृपाकल्पतरुफलपरिपाकः।

( सर्वे किञ्चित्परिक्रामन्ति )

**बलिः**—कथमुपक्रान्त एव समन्ततोऽप्यमरासुरैः क्षीरोदमथनप्रयत्नः ?

तथा हि—

पर्यायभ्रमिताचलेन्द्ररभसप्रारब्धसङ्घर्षण-
व्याकीर्णार्णवदुग्धफेनपटलप्रौढाट्टहासोदयः।
कस्मै विस्मयमातनोति मथनं नेदं सुपर्वासुर-
स्वैरुद्भूतगलाद्भुतध्वनिचमूसम्मूर्च्छनामांसलः ॥१९॥

---

१. इत्युपप्लतः; २. ०त्येष।

अमरासुरवीरतीव्रकर्षद्-
भ्रमितो भाति स एष मन्दराद्रिः ।
वचनैरिव वेदवाददूरै-
र्हृदयं मन्दधियामगाधराद्यैः ॥२०॥

मन्थानभूधरपरिभ्रमसम्भ्रमोत्थ-
दुग्धोदबिन्दुकलिकाद्रुहिणाण्डभित्तिः ।
बध्नाति भीमरवडम्बरभिन्नरन्ध्र-
नीरन्ध्रगाति[1]बहिरावरणोऽल्पबुद्धिम्[2] ॥२१॥

महेन्द्रः—अये, जननप्राय एव सुधारसः ।

( नेपथ्ये )

व्यथितवासुकिवक्त्रविनिर्गलद्-
गरलवह्निशिखापरितापितान् ।
झटिति[3] चेतयते विबुधासुरा-
ननिल[4]नीतसुधा[5]वृषभावलिः ॥२२॥

भार्गवाङ्गिरसौ—अहो, फलितप्राय एव परिश्रमः ।

बलिमहेन्द्रौ—अस्माकं मनोरथोऽपि ।

( पुनर्नेपथ्ये )

यावत्सुधामधुरशीतलगन्धवाहि-
वातः प्रवाति परिशोभितसौख्यसारः ।
तावत्करच्युततया दनुजामराणां
भ्रातां[6] सहत्वकरणादचलो निमग्नः ॥२३॥

सर्वे—( साश्चर्यम् )—

उन्नतोऽपि दितिजामरबाहुदण्डै-
रुद्भ्रात एष कुधरो[7] जलधौ निमग्नः[8] ।
उद्बोधितोऽपि कुनृपो विबुधैरमात्यै-[9]
रुन्मत्तधीरिव विपज्जलधारधीरः ॥२४॥

---

१. ०वाति; २. ०रगो ·· ·· ··बुद्धिम्; ३. झडिति; ४. रनिल०. ५. ०नुधा०; ६. भातां; ७. कधरो; ८. जलधौममज्जा; ९. उद्बोधितो विबुधनृपोऽजरवैरिमात्यैः ।

( नेपथ्ये )

यावन्मज्जति मन्थरो जलनिधौ आक्रोशदासीविष-
व्याकोचत्स्फणिमण्डलीपरिगलत्क्ष्वेलाग्नितापादिव[1]।
तावत्कच्छपरूपधृत्यमकरादुद्धृत्य सत्त्वोदित-
श्रीमन्नम्बुजलोचनोऽखिल[2]जगज्जालं निरालोचनम्॥२५॥

**सर्वे**—हन्त, निरवधिककृपानिधिना भगवता पुनरुज्जीविताः स्मः।

निष्प्रत्यूहमहावीरा निर्मथन्ति यथा पुरा।
निर्गरला इवेभेन्द्राः नीरेजवनमम्बुधिम्॥२६॥

( नेपथ्ये )

उदयति कलशाब्धौ उद्धृताभीरताप-
स्थगितजगदपोहा ज्वालकः कालकूटः।

**सर्वे**—( ससम्भ्रमम् ) शृण्वन्ति।

( पुनर्नेपथ्ये )

कवलयति तमेनं कोऽपि कारुण्यभूमा
करकमलमिलिन्दं कालकालैकनामा॥२७॥

**सर्वे**—( सहर्षम् )—

अद्य खलु निरातङ्कसुधासारसम्भवः।
श्रुतपरिचयः प्रागेवोक्तो यथा दुरहंक्रिया॥२८॥
जलनिधिमथप्रारम्भे भूद्गरं भृशसीकरम्।
तदिह गिलितं[3]सर्वज्ञानात्[4] कलाधरमौलिना[5]॥२९॥
प्रभवति[6] सुधासारं[7] सौजन्यवत्कुशलाङ्गना[8]॥३०॥

( नेपथ्ये )

असुरसुरवनाली मथ्यमानामृताब्धिः
प्रभवदतिविशालावर्तचक्रालवालान्।
अजनि सुरतरूणामावलिः फेनजाल-
प्रतिमकुसुमजालामोदसम्मोदनश्रीः॥३१॥

---

१. ०तापानिव; २. ०चनोखिल०; ३. तद्दिहागलितं; ४. ०ज्ञान्ना०; ५. ०मौ .....; ६. प्रभवीत; ७. सुधासार; ८. ०कुशलाङ्गः।

किञ्च—

असारतां दृशज्जालैरबोढुं किल वारिधौ[1]।
चिन्तितार्थप्रदस्सोऽयं चिन्तामणिरुपेयिवान् ॥३२॥

अपि च—

परमत्र चित्रमधुना पिशुनायैवाखिलार्थदो[2] जातः।
परिमन्दरकृतमन्दिरवशवर्त्ति[3]करुणापरम्पराप्राप्ते ॥३३॥

**सर्वे**—( सविस्मयमाकर्णयन्ति )।

**महेन्द्रः**—एतत्सर्वमपि अपहरिष्यामः।

**बलिः**—यथाज्ञापयति भगवान्।

**भार्गवः**—तथैवास्तु।

**आङ्गिरसः**—उचित एव उदारभावो वैरोचनेः।

( पुनर्नेपथ्ये )

करी हरिश्शीतकोऽप्सरसस्त्री-
कदम्बकं [4]वाजनि दिव्यभोग्यम्।
आस्तामिदं निस्तुलनप्रशस्ता
जजान[5] लक्ष्मीरपि वारुणी च ॥३४॥

**बलिः**—सर्वमपि वस्तुजातं भवतामेव। अनयोस्त्वेका अस्माकं प्रदेयाः।

( नेपथ्ये )

कुत्र वा वस्तुजातं, सर्वमपि भवत एव, यदेते छायामेवानुवर्तन्ते।

( पुनर्नेपथ्ये )

धेन्वन्तरं[6] हरेरेष धन्वन्तरिरितीरितः।
सुधाकलशभृज्जातः सुजातमपुरा धृतः ॥३५॥

**सर्वे**—( सहर्षम् ) हन्त, पूर्णो मनोरथो यदेतेषां जरामरणनिराकरणे सुधा समुद्भूता।

**( इति ससम्भ्रमाः परिक्रामन्ति[7] )**

---

**१. ०वोढुं········रिधौ; २. पिशुन ········खिला०; ३. ०दशिदरि; ४. चा०; ५. ०जान; ६. धन्वन्तरं; ७. इति ससम्भ्रमाः।**

( नेपथ्ये, कलकलानन्तरम् )

हन्त, किं कुर्मः ? एते दैत्यदानवाः प्रहस्य सुधाकलशमाच्छिद्य परिद्रवन्ति । तदिह कस्मै किं कथनीयम् ? का वा गतिः ?

श्येनावपातमापत्य दैत्यदानवयूथपाः ।
[1]अन्योऽन्यहस्तसङ्क्रान्तामाकर्षन्ति सुधाघटीम् ॥३६॥

**महेन्द्रः**—( आङ्गिरसमपवार्य ) किमिदानीमप्यमर्षिणी भवितव्यमस्माभिः —

यत्सापत्नकृतापदानसदृशं यच्च प्रवीरोचितं
[2]यल्लोकेश्वरताभिवृद्धयशसा श्रेयोजुषास्साम्प्रतम् ।
यच्चागस्कृतचातुरीबलफलं यद्वाऽनुरूपं[3] मते-
स्तत्सर्वं कलये विरोधिवलये तिष्ठन्तु हृष्टास्सुराः ॥३७॥

**आङ्गिरसः**—द्रष्टव्यमुपर्यपि, यदतिसन्धातव्या बलवत्सपत्नाः ।

**बलिः**—( भार्गवमपवार्य )—

यत्साधनं सुधाया यच्चासुखकरं[4] गता कलशी ।
तत्सर्वमुचितमेषा हर्तव्या दैत्यदानवस्पर्धा ॥३८॥

**भार्गवः**—त्वरितमेवोपगच्छामः ।

**महेन्द्रः**—( बलिं प्रत्यपवार्य ) कोऽयं सम्भ्रमः सर्वेषाम् ?

**बलिः**—( तूर्णमुपगम्य ) दैत्यदानवान् वयं निवारयिष्यामः ।

( इति सभार्गवो निष्क्रान्तः )

**महेन्द्रः**—( वज्रमुद्यम्य ) भगवन्नाङ्गिरस—

पन्थानमन्यायमुपाश्रितानां
[5]प्रारब्धकोलाहलसम्भ्रमाणाम् ।
शिरांस्यरीणां प्रतिभागिरीणां[6]
हराम्यहं तालफलोपमानि ॥३९॥

---

१. अन्योन्य०; २. ०लोक०; ३. यद्वानुरूपं; ४. ०सुखकरं; ५. ०काला०; ६. ०भागरीणां ।

आङ्गिरसः—महाराज, क्षणमुपसेव्यतामुपसेव्यतामुपशमः[1]।

अस्येव त्वयि सर्ववर्तनचमूगर्वापनोदप्रदा
सर्वेश, स्फुटनिर्वृतिक्रमवतो निस्त्रिंशविद्यारसः।
यच्चोदीरितमात्मना तदुदितं सत्यापि तुन्दीय्यते
यत्नः कोऽपि सुधाहृता रिपुहृता यद्वा पुरश्शार्ङ्गिणा ॥४०॥

तदावामप्यनुगम्य भगवते सर्वमपि निवेद्य यथोचितं यतिष्यामः।

( इति निष्क्रान्तास्सर्वे )

॥ इति श्रीवेङ्कयार्यविरचिते महेन्द्रविजयाभिधाने डिमे
तृतीयोऽङ्कः[2] ॥



१. ०मुप········ व्यता०; २. समाप्त इति कोशे दृश्यते।

## अथ चतुर्थोऽङ्कः

( ततः प्रविशति नारदश्शिष्यश्च )

**नारदः**—शृणु तावत् ।

यदिन्द्रजालं जनलोचनानां
यदङ्गना सर्वकलासमष्टिः ।
तदप्रतिद्वन्द्वविलासमूर्तिं[1]
स्त्रीवेषमापत्तरसा[2] मुकुन्दः ॥१॥

**शिष्यः**—अच्चरियं, अच्चरियं, सत्तूणीविअये इत्थिआवेसं सन्धाणेणत्ति ।

( छाया ) [आश्चर्यमाश्चर्यम् । शत्रूणां विजये स्त्रीवेषसाधनमिति । ]

**नारदः**—निरवधिककपटसीमानः खलु स्त्रीजनाः, तदीयेनैव वेषेण सुलभः खलु दैत्यदानवानामतिकुहनाचरणानामिति साधनक्रमः ।

**शिष्यः**—( सोत्कण्ठम् ) तदो, तदो ?

( छाया )—[ ततस्ततः ? ]

**नारदः**—ततस्तमभिलक्ष्य पिता मदनसायकानां नायको दैत्यदानवानामद्भुतनिमग्नलग्नान्तरमूढान्यतरतदङ्ग[2]सुषमायान्त्वनायास - वशीकृतानां[3] सविधमुपेत्य सत्यमेवोचिरे ।

**शिष्यः**—अहमहे मोहं अन्तणाभअवदो मायाविलासंस तदो ।

( छाया )—[अहो, मोहकत्वं भगवतो मायाविलासस्य । ततः ? ]

**नारदः**—उक्तञ्चैतत्सम्प्रति तां प्रति—

भाजिकेऽद्य महितां सुधां च त्वं[4]
हे कातराक्षि विभजस्व नः स्वयम् ।
नेतरो हरति मामकं[5] क्वचि
[6]जातरागहृदया यथामिषे ॥२॥

---

१. ०विलासम्……मापं तरसा; २. ०भूगास्तरङ्गास्तदङ्ग०; ३. ०कृतानास्स०। ४. भ्रातः को मही सुधामिव; ५. मामाकं; ६. जातरोजहृदयाय यदामिषे ।

**शिष्यः**—निविणि खु मन्तिदं लेखा च दो ।

( छाया ) [ निपुणं खलु मन्त्रितं च । ततः ? ]

**नारदः**—

गुणो गृहीतः कथमङ्गनानाम्
अणोरणीयानपि वा भवद्भिः ।
कथं जनः प्रत्ययभाजनं स्याद्
विकारवेदी विषवल्लिकासु ॥३॥

**शिष्यः**—सच्चं एव्वंटंवं भअवंवेणा । अह कहं गहिदन्तेहिम् ?

( छाया ) [ सत्यमेवोक्तं भगवता । अथ कथं गृहीतं तैः ? ]

**नारदः**—यथा मोहाकुलहृदयैः ।

**शिष्यः**—( सोत्कण्ठम् ) तदो किण्णु सुहाभवन्तं संहत्थे समापिदा ?

( छाया ) [ ततः किन्नु सुधा भगवतो हस्ते समर्पिता ? ]

**नारदः**—न केवलं समर्पिता संविभक्ता च[१] ।

**शिष्यः**—( सभयम् ) अवि णाम सुदाणाविसुहासुलसोदन्तो ?

( छाया ) [ अपि नामासुराणामपि [२]सुधासुरसो दत्तः ? ]

**नारदः**—न हि, न हि, सुराणामेव ।

**शिष्यः**—अहमहे, सिमुहुण्ठिरेसु बलकेतेसु बलिं पमुहोसु । कहं सुला हाला होसुलाणा एव ?

( छाया ) [ अहो, सम्मुखस्थितेषु बलवत्सु बलिप्रमुखेषु कथं सुधालाभस्सुराणामेव ? ]

**नारदः**—आश्चर्यम्, वत्स, माऽत्रमंस्थाः । एवमचिन्त्यः खलु भगवान् अखिलनाटकसूत्रधारः ।

**शिष्यः**—होदु, तदो ?

( छाया ) [ भवतु । ततः ? ]

**नारदः**—सुराणामसुराणाञ्च पङ्क्तिद्वयं कल्पयित्वा प्रथममारभ्यैव सुधामर्पितवान् ।

**शिष्यः**— अञ्चरियम्[३] ! कहिं कालंमि असुला कीलिसा जादा ?

( छाया ) [ आश्चर्यम् ! कस्मिन् काले असुराः कीदृशा जाताः ? ]

---

१. श्च; २. २-०सुधारसो··· ··· ··· ···; ३. अच्चअयम् ।

**नारदः**—सुधारसझरीजातसमुल्लङ्घनजाम्भिकैः ।
कटाक्षैरेव मोहिन्याः कामसाहित्यमाययुः ॥४॥

**शिष्यः**—अहो, केणाविहावीणादासुहायसुलेसु ?
( छाया ) [ अथ केनापि न पीता सुधा असुरेषु ? ]

**नारदः**—अमरनिकरसन्निधौ तदीयं वपुरनुकृत्य राहुकेतू अमृतमपिबताम् ।

**शिष्यः**—अच्चाहिदम् ।
( छाया ) [ अत्यहितम् । ]

**नारदः**—ततश्शिरोऽपि द्रुतमच्छिनद्धरिः करालचक्रः ।

**शिष्यः**—( सहर्षम् )--तदोत्तमणं[१] ।
( छाया ) [ तदुत्तमं सः[२] । ]

**नारदः**—सर्वं विभज्य देवानां सममेव सुधारसम् ।
गत एव निजं लोकं गरुडं[३] समुपाश्रितः ॥ ५ ॥

**शिष्यः**—कहिं महान्दो ? कहिं बलोदेवि ?
( छाया ) [ कुत्र महेन्द्रः, कुत्र बलीन्द्रोऽपि ? ]

**नारदः**—सनरसीम्न्येव[४] ।

**शिष्यः**—( सहर्षम् )—कहिं वा [५]हविन्नादि, [६]एदं कज्जंति वेवहि मे हिअअम् ।
( छाया ) [ कथं वा भविष्यत्येतत्कार्यमिति वेपते मे हृदयम् । ]

**नारदः**—[७]करुणरसकल्लोलकलापी न दृगञ्चलः ।
भगवानेव सम्मोदं भजतां जनयिष्यति ॥ ६ ॥

**शिष्यः**—( सोत्कण्ठम् )—अह्मे विगअणङ्गणं गदाएव विकमं सरिकादीणा-वेंरवह्म ।
( छाया ) [ आवामपि गगनाङ्गणं[८] गतावेव विक्रमं शक्रादीनां पश्यावः । ]

**नारदः**—अस्तु, गच्छावः ।

( इति निष्क्रान्तौ )

॥ इति मिश्रविष्कम्भकः ॥

---

१. तदोत्तम्; २. ततो··· ···; ३. गरुडां; ४. ०सीम्नैव; ५. हविन्नदि । ६. वा··· ···; ७. करुरस०; ८. ०नाङ्क० ।

( ततः प्रविशति महेन्द्रो मातलिश्च )

मातलिः—आयुष्मन्,

इमे खलु समुद्यतास्सद्य एवारुह्य वाहा
अबध्यापारबाणानामुच्य तूणीरान्याकलय्य ।
धनुष्यनुसन्धाय शरानादायाट्टहासा
[1]आभिमुख्यं [2]नो वर्तन्ते ह्यत्र महासुराः[3] ।।७।।

महेन्द्रः—अहो, युगपदेव सङ्क्रान्तमखिलमपि ।

आगस्कृतामपकृतिश्रितपोषणं च
भीता महर्षिविहिताभयदानदीक्षाः ।
आनन्दनं च जगतामनुरागभाजाम्
आयोधनोत्सवमदानुभवश्चिरेण ।। ८ ।। इति ।

आदिश्यतां च सुरा हरिदीश्वरास्सत्वरं[4] समरसन्निधिं समागच्छतेति ।

मातलिः—न खलु आदेशमपेक्ष्यन्ते त्वनुजीविनः । यदेते—
निस्त्रिंशाधूननश्रीनिबिडितककुभश्चण्डचण्डाट्टहासा
निश्शङ्कोच्चार्यमाणाः प्रतिभटपटलीनिग्रहोदग्रवादाः ।
निर्निद्राढौकिताश्च प्रपददलितभूधूलिपाली घनाली
नीरन्ध्राकान्तलोका दधति रणधुरं निर्जरास्फूर्जिताशाः ।। ९ ।।

एते च—

गन्धर्वविद्याधरयक्षरक्ष-
पिशाचकास्तुम्बुरु[5]किन्नराणाम् ।
सगूढपाद्गुह्यकचारणानां
अहो, समेताः समितिं[6] क्षणेन ।। १० ।।

किञ्च—

एते भूतेशढक्काविकटपटात्काररतालानुकूला
व्यावल्गत्कालरापन्न[7]प्रतिकलपरिमुक्ताट्टहासप्रहाणाः ।
भेरीभाङ्कारवातां प्रतिभटपटलप्रौढदर्पोग्रभूत-
व्रातव्यापादमन्त्रं दिशि दिशि दधते रौद्रमुद्रामनिद्राम् ।।११।।

---

१. नाभि०; २. न; ३. वर्तन्ते महासुराः; ४. ०दीश्वरास्ससमर० ।
५. ०कीम्बुरुष; ६. समर्ति; ७. ०रान्न० ।

अपि च—

उद्दामदन्तावलदन्तकुन्त-
स्सद्यस्समुज्जृम्भितथालथल्यैः ।
अहो, विहाय द्रुहिणाण्डभित्तिम्
अलायि कुत्रापि किमन्धकारैः ॥१२॥

महेन्द्रः—सन्त्वेते सहायमात्रतानुकारिणस्सर्वे गीर्वाणादयः । न खल्वहमेतानाशंसे ।

सन्त्वन्येऽपि मृगाणां सङ्घा सन्ध्यामृगाधिपस्याग्रे ।
समदमदावलदारणसमयसहायस्तु नखशिखान्नान्यः ॥१३॥

( दक्षिणाक्षिस्पन्दं सूचयित्वा )—

अरातिजयसंहृतमपि नीतिवशंवदाम् ।
स्फुरद्वामेतरं चक्षुः पुरो निर्दिशतीव[1] माम् ॥१४॥

( वज्रमुद्यम्य ) भगवन् वज्रायुध —

परुषतरधराभृत्पक्षविक्षोभणेषु
प्रसृतमपयशो[2] नः प्रेरणादेव यत्ते ।
तदखिलमपमार्ष्टुं दानवानीकिकीनां[3]
अतिमृदुगलजातेष्वर्पये माऽस्म कुप्यः ॥१५॥

( विमृश्य )—

अनुकूलद्धि सुधारसाज्यपाताद्[4]
अतिवेलं ज्वलतः प्रतापवह्नेः ।
कियती स्याद्दिति[5]जातसैन्यजात-
[6]क्षतिरुद्रवज्रकरेऽद्य साहसश्रीः ॥१६॥

( मुखमुन्नमय्य ) कोऽसाविति[7] एवाभिवर्तते वधे नः[8] ?

मातलिः—आयुष्मन्, अयमेव निर्व्याजराजधानी हृदतिपातकी । दैत्यहतको बलिर्नाम ।

महेन्द्रः—अद्य खलु भुजसारसम्प्रदर्शनसमयः[9] । ( बाहुमभिलक्ष्य, सावष्टम्भम् )—

येऽनुपायमनोरमां रमन्ते
विरहय्यासमजानतीमुपात्ताः ।
मदमञ्चयति बलिर्यस्स[10] एवमग्रे
ननु बाहो, त्वमु धक्ष्यसे[11] गुणः कः ॥१७॥

---

१. निर्दिशति; २. ०को०; ३. ०किनी०; ४. ०पाता ५. दिति० । ६. ··· ···क्षितिव्रजदाद्य; ७. ०वित०; ८. न; ; ९. ०सारस ··· यः । १०. ०यति यस्स; ११. त्वमुक्ष्यसे ।

( ततः प्रविशति रथेन बलिः[1] सारथिश्च )

सारथिः—आयुष्मन्, इयमेवानुत्खातिनी भूः । तदत्रैव रिपुभिर्योध्यः ।

बलिः—( चक्षुः प्रसार्य ) कथं सोऽयमनुतप्तो महेन्द्रो[2] नाम गीर्वाणहतकः ?

येन प्रागपयातमाजि[3]निकटादाटोपघाटीमुचा
पश्चादागतमानताङ्गमहं भ्राता यवीयानिति ।
अद्य प्रोद्यतबाहुतारणरसारोपेण[4] वीरायितं

सारथिः—( विहस्य )—

तत्सर्वं विदुषा रुषा प्रभवतां सोऽयं ध्रुवम्मन्यते ॥१८॥

बलिः—ततः—

कुपिततादृशता[5]पविमुक्तवा-
गुपचितप्रतिरोधविलोपकः ।
गलितमन्यु[6]निरोध इवोरगः
स्फुटममर्षरसो[7] मम जृम्भते ॥१९॥

मातलिः—महाराज, सत्यमेव तदमर्षमापादयति मदोन्मादभरितानि सपत्न-चरितानि ।

महेन्द्रः—समानीयतां साङ्ग्रामिको रथः ।

मातलिः—उपस्थित एवायम् । समारोहत्वायुष्मान् । अलङ्कुरु जयाय त्वमधुना सुमनोरथम् । श्रीरस्तु ।

महेन्द्रः—एवं क्रियते ।

( इति मातलिना सहैवारोहणं नाटयति )

महेन्द्रः—मातले, गृहाण हयप्रग्रहान् ।

मातलिः—किं न [8]पश्यत्यायुष्मान् रथवेगम्, यदेकोत्पतनेनैव दिग्विजय-सम्मुखीनाः स्मः ।

आचार इत्येव हयप्रयोग-
कथासमासाधितसारथिश्रीः ।
परन्तु यद्यत्प्रतियाति चेतस्-
स्तदन्तिकं हन्त, रथोऽपि याति ॥२०॥

( इति रथवेगं नाटयति )

---

१. वलिना; २. कथमयं महेन्द्रो; ३. ०माज०; ४. ०रोपणं; ५. ०तापवा० । ६. ०मन्त०; ७. ०मष०; ८. पतत्या० ।

( ततः प्रविशति बलिस्सारथिश्च )

**सारथिः** —आयुष्मन्, इयमनुत्खातिनी[1] भूः । तदत्रैव रिपुर्योद्धव्यः ।

**बलिः** —( चक्षुः प्रसार्य ) सोऽयमनुतप्तो[2] महेन्द्रो नाम गीर्वाणहतकः ?

येन प्रागपयातमाजि[3]निकटादाटो[4]पघाटीमुचा
पश्चादान[5]तमानताङ्कमहं भ्राता यवीयानिति ।
अद्य प्रोद्यतबाहुना रणरसारोपेण वीरायितं

**सारथिः** —( विहस्य )—

तत्सर्वं विदुषा रुषाद्य भवता सोऽयं ध्रुवम्मन्यते ॥२१॥

**बलिः** —ततो विश्वरथः[6] प्रवर्तताम्, यतः कृतघ्नधुरन्धरः पुरन्दरो नाम ।

**सारथिः** —यदाज्ञापयत्यायुष्मान् ।

( इति रथवेगं नाटयति )

**मातलिः** —महाराज, सन्नद्धोऽयमायातीति । तदायुष्मता भवितव्यमप्रमत्तेन ।

**महेन्द्रः** —इयमपि कियती विभीषिका सन्नद्धोऽयमिति ।

उद्यद्भूधरगर्वचर्वणकलानिष्णातशस्त्रोच्छ्यै-
विद्राव्यापि च काद्रसौरभकिरं सेनामणूनामरैः ॥
उद्वेलं विहरत्यपास्तकरुणालेशे मयि प्रागसौ
निर्मुक्तो विधिनाऽथ वागुपधिना[7] जीवेन्न जीवन्नपि[8] ॥२२॥

**मातलिः** —अस्त्येतदप्यत एवायमवसर इति विज्ञापयाम्यरिविजयस्य ।

( इति रथप्रस्थानं निरूपयति )

**महेन्द्रः** —( विलोक्य, उच्चैः ) भो भो वैरोचने, यदेवमभियुक्तो बलवद्भिरस्माभिः ।

**बलिः** —कुतो वा मम वीरता भवादृशानां पुरतः ?

अमेयधैर्यशालित्वादयं जानाति मन्दरः ।
न वास्तव[9] वचोभङ्गी भो[10] गीर्वाणशिरोमणे[11] ॥२३॥

---

१. इयमतनी; २. ~ …नुप्ता; ३. ०ज०; ४. ०टाटोप०; ५. चापश्चानत० ।
६. बिवरथः; ७. ०ना वा०; ८. ०नटी०; ९. वा तव; १०. न; ११. ०मणिः ।

महेन्द्रः—( सासूयम् )—

याचितोऽयं नभो [1]वाचा पूर्वं वाचस्पतिरपि ।
न चैव चेतनप्राये [2]त्वयि त्वस्माकं कियाञ्जयः ॥२४॥

( नेपथ्ये )

भो भो विरोचन, मय-शम्बर-कालिनेमि-जृम्भ-बल्यादयो बलाधीश्वराः सरभसमुपागच्छध्वं, महाराजवैरोचनेः रथपार्श्वं, यदेतमसमीक्ष्यकारी पुरन्दरो नामाभियुक्तः ।[3]

बलिः—( स्वगतं सहर्षम् ) - अस्मद्बलानामेतत् ।

( पुनर्नेपथ्ये )

कुतो नखप्रभेद्योऽपि बलेरच्छेद्यमूलता ।
पुरन्दरादृते[4] का वा पुनश्शक्तिः पुरन्दरे ॥२५॥

अतो वयमेकैकश एव संहरिष्यामः संहितिमादितेयानाम्[5] ।

सारथिः—आयुष्मन्, इदमपि बलाधिपतीनां बलातिशयवितुन्दं[7] वचः ।

महेन्द्रः— ( सावज्ञं, मातलिं पश्यति ) ।

मातलिः—भो भो, ( परिसृत्य ) भो भो, वरुणवाय्वादयो दिगधीश्वराः समये सुपर्वणां प्रतिद्वन्द्वी भवध्वं यदेव महाराजस्स्वयमभियुङ्क्ते विरोचनतनुभवम् ।

( नेपथ्ये )

सुखमारुतनिर्वाह्ये मुधाजंझू (?) मरुद्गतिः ।
तदस्मद्धासजय्येषु[8] दैत्येषु न रणोऽस्तु[9] नः ॥२६॥

मातलिः—महाराज, श्रुतं श्रोतव्यम् ।

महेन्द्रः—( अनाकर्णितकेन बलिं प्रति )—भो भो वैरोचने, धीरोऽसि विकत्थनेन, तदद्य समारोचितामासाद्य भुवं सद्य एव विघटिताशं करिष्यामि [10]इति सज्जीभवतम् ।

बलिः —दृष्ट एव सुराणामनिवारण[11]प्रयत्नः[12]। तदद्यापि सुधास्वादेनोज्वलं बलमवलोकयामः ।

( इति सरथसारथी निष्क्रान्तौ )

---

१. ०वाचा वाच०; २. त्वयि किया०; ३. ०भियुङ्क्ते; ४. कुतो ... रच्छेद्य० । ५. पुरा दहते; ६. संहति०; ७. ०वितुनं०; ८. ०जप्येपु; ९. रणोस्तु; । १०. भवतम्; ११. ०निवारण; १२. पराक्रमः ।

( ततः प्रविशति नारदशिष्यश्च )

**शिष्यः**—अहमहे, गअणहण्ठिदं[1] विवेवइ मे हिअअम्, जिसुलासुलाणां सन्धासन्धिसमुओअदिमेन्त भेसदि ।

( छाया ) [ अहो, गगनपथस्थितस्यापि वेपते मे हृदयम्, यत्सुरासुराणां शस्त्राशस्त्रिसमयोऽतिमात्रं भीषयति । ]

जह पङ्कणेणासन्धाणाणीमीलदिविलोअणि ।
पढंकालेण भेरोणा सुदोदिपि हिदा विअ ।।२६।।

( छाया ) [ यथा—

प्रकम्पनेन शस्त्राणां निमीलनविलोचनम् ।
पटात्कारेण भेरीणां श्रुत्या हि पिहिताविव ।।२७।। ]

**नारदः**—मा भैषीः,

मुसलगदासिपट्टसपरश्व[2]थशूलमुख-
प्रसरणकम्पनोदयनकुन्तनसङ्क्रमणैः ।
अधिगतवीरवादसहकारिभिराकलितं
नयनरसायनं खलु रणं सुकृती कलयेत् ।।२८।।

**शिष्यः**—एवेंव सेंकपोतन्थ भवन्ताणा ।

( छाया ) [ एवमेव सङ्कल्पस्तत्रभवताम् । ]

**नारदः**—( विलोक्य ) कथं प्रवर्तत एव समरसौरभः सुरासुरवीराणाम् । तथा हि—

विध्वस्तोदस्तचापं विदलितनिपतद्वारबाणाप्रकाण्डं
प्रभ्रष्टप्रासकुन्तत्रिशिखशरगदामण्डलाग्रावृताग्रम् ।
निर्भिन्नोष्णी[3]षजालं निबिडितविलुलद्रत्नभूषाविशेषं
निर्व्यूढप्रौढवादं निरुपमसुभरद्भूतलं भूतलक्ष्यम् ।।२९।।

ये विद्युदुद्यट्टचयस्सुधाशा
ये चापि नीलच्छवयो द्विषन्तः ।
एषां मिषायाति रणोपमर्द-
स्तेजोऽन्धकारव्यतिषङ्ग······भङ्गी ।।३०।।

**शिष्यः**—( अक्षिणी पिधाय ) किण्णु खु एवं संवसहातलादोकलकागणिगअणि आअञ्चेदि ?

---

१. ०णप०; २. ०थ०; ३. ०न्नोष्ठणीष० ।

( छाया ) [ किन्नु खल्वेवं सर्वं सहातलात् करका गगणाङ्गण[१]-मागच्छन्ति ? ]

**नारदः**—वत्स, न विटङ्कं भवता ।

निस्त्रिंशकृत्तोन्मदकुम्भिकुम्भा-
न्निर्मुक्तमुक्ता[२]फलपङ्क्तिरेषा ।
समुच्चलन्त्या[३]प्तुमिवानुरूपं
सौवर्णनारीकुचकुम्भदेशम् ॥३१॥

**शिष्यः**—अहमहे, एवदे खु कीरिसिदी दुवेवि रहेहिं अहिवण्टइ[४] ।

( छाया ) [ अहो, एतौ खलु कीदृशौ द्वावपि रथाभ्यामभिवर्षेते । ]

**नारदः**—दूरस्थितया न जानासि बलिमहेन्द्राविति । पश्य —

अयं वज्रधरस्तूर्णम् आयाति विबुधाधिभूः ।
अधिज्यधन्वा बलिरप्ययं यो विबुधाधिभूः ॥३२॥

**शिष्यः**—किण्णु खु उण्णमिदहत्थेहं तेहि आणोणिविम्पलाववाअवणां अलविदं विअ पडिहादि ?

( छाया ) [ किन्नु खलु उन्नमितहस्ताभ्याम् अन्योऽन्यं [५]विप्रलापवचनमालपन्ताविव[६] मे प्रतिभासेते[६] ? ]

**नारदः**—वत्स, [७]वैरोचनिरेतत् । वत्स, निपुणमाकर्णयावः ।

( नेपथ्ये )

रे रे निर्जरापसद[८], सुधास्वादनकृतार्थ मन्ये[९] ।
शतमन्योः क्व नु खलु तवापि समरोर्वरावप्रस्तावः[१०]॥३३॥

विदितमेव पलायनपाण्डिती,
विलसित रणमूर्द्धनि ते पुरा ।
विसृज वीरपदं बलमन्दिरे
विहर सुन्दरमन्दरकन्दरे[११] ॥३४॥

**नारदः**—वत्स, वैरोचनि[१२]रेतत् ।

**शिष्यः**—किण्णु खु फडिवअणि कहोदि महाराअमहेन्दो ?

( छाया ) [ किन्नु खलु प्रतिवचनं कथयति महाराजमहेन्द्रः ? ]

---

१. ०ङ्क०; २. ०कु⋯ कुम्भनिर्मुक्ता०; ३. ०त्वा०; ४. वर्न्ट:; ५. विप्रा० । ६. ०मालपितप्रतिमिव मे प्रतिभाति; ७. ०ने०; ८. ०श०; ९. ०मन्य । १०. ०राव⋯तादः; ११. ०कन्धरे; १२. ०ने० ।

( पुनर्नेपथ्ये )

अरे जाल्म, न जानासि पुरन्दरस्यापि पराक्रान्तम्। अत एव विकत्थसे।

अस्मिन्नाकस्मिकोद्यद्रणरभसभराक्रान्तमत्ताभियाति
प्रौढाहङ्कारलुण्ठापरिचय[1]विजयारम्भशम्भायुधाङ्के ।
वाचाहस्पतेर्द्रागुपयति मृदुतां हीयते किं न चेत्ते
गात्रं सत्रं न किं स्यादुपरिनवततां किङ्कराकादिकानाम् ॥३५॥

नारदः—वत्स, शक्रस्येदं सक्रोधोदितम्।

शिष्यः—जुज्जइ। कथं उपकन्तं एव्व समलविलेसिदं एदेहिम्।

( छाया ) [ युज्यते। कथमुपक्रान्तमेव समरविलसितमेताभ्याम् ? ]

नारदः—अथ किम्, यदनयोः —

परन्त्वेके बाणाः प्रतियुग[2]युगान्तव्यतिकर-
प्रकुप्यज्जीमूत[3]गलज्जलधारा प्रतिभटाः।
विशीर्यन्त्यन्योऽन्यं प्रतिहतिवशादम्बुधियुगी
विघट्टव्याकीर्णस्फुरततरं गोपमितयः ॥३६॥

शिष्यः—अहमहे, सरवञ्ज[4]रमग्गाणादुवेणाविदंसण णलहिअदिताणि ववहाणं वसलणेण विण्णाणाचंखुणादेविव असमलडंतत आणान्तवं भवन्तेहिम्।

( छाया ) [ अहो, शरपञ्जरयोर्द्वयोरपि दर्शनं न लभ्यते। तस्माद् निर्व्यवधानप्रसरणेऽणोविज्ञानचक्षुषा दृष्ट्वा, समरवृत्तान्तमाज्ञाप्यं भवद्भिः। ]

नारदः—

अहो, महेन्द्रबाणानामाचारः क्रियतेऽद्य यैः।
मुक्तापि शरधिं शत्रोस्सारथेः शरधौशिरः ॥३७॥

शिष्यः—अहमहे, खडिदेवि शलपञ्जलेण दिंसदि बलिन्दोन्ति।

( छाया ) [ अहो, खण्डितोऽपि शरपञ्जरेण दृश्यते बलीन्द्र इति। ]

नारदः—अन्तर्हित एषः।

मारीचादपि दुर्धर्षः मयादपि च शम्बरात्।
मायेन्द्रजालविद्यायाम् अतिरिक्तं बलं बलेः ॥३८॥

---

१. ०लुण्ठापरिचिय०; २. ०प्रतियुगा०; ३. ०मूत······जल०; ४. ०ञ्जु०।

( नेपथ्ये )

अले, भङ्खेहिणं महेन्दं जंसुहापाणमेन्तजणिदं दव्वो आपाणि विण जाणादि ।

काउण सक्कस्सवहं पावणलुलिलं णवं ।
विचह्मा विचणो [1]लणसीसिम्मिणिजषांबुदमाणना ॥३६॥

( छाया ) [अरे, भयमेनं[2] महेन्द्रं यत्सुधापानमात्रजनितदर्पः आत्मानमपि न जानाति ।

कृत्वा शक्रस्य वधं पीत्वा रुधिरं नवम् ।
नृत्यामो रणशीर्षे नित्यं निर्वृत्तमानसाः ॥३६॥ ]

शिष्यः—कीलिसाणि एदम् ?

( छाया ) [ कीदृशानामेतत् । ]

नारदः—वलीन्द्रमहेन्द्रजालमायोद्भूतानाम् असम्वद्धप्रलपितमेतत् । इतः पश्य —

क्वचिद्विद्युज्जालप्रकटतरविद्योतविततः
क्वचिद्दावाज्वाला[3]वलनजनितात्यद्भुततरः ।
क्वचिल्लोलावालप्रविततपणप्रायितभयः
स्वयं चावृष्टोऽसौ[4] कलयति बलिर्मायिक[5]बलम् ॥४०॥

शिष्यः—अह किण्णु पडिवज्जइ महालाअ महेन्दो ?

( छाया ) [ अथ किन्नु प्रतिपद्यते महाराजमहेन्द्रः ? ]

नारदः—पश्य—

विशिखै[6]र्दिवयेयं वा विसृश्यत्यु[7]पर्बृहितैः ।
विवस्वानिव दुष्प्रेक्ष्यो विभाति विबुधाधिपः ॥४१॥

शिष्यः—एदे किरिसणवजलहरवहविहिदपलिहावाणिरन्दरणिवडिज्जमाणा सलासाला अकमन्दि संकरहासविहम् ।

( छाया )

[ एते कीदृशाः नवजलधरप्रभाविहितपरिभावाः ।
निरन्तरनिपात्यमानशरासारा [7]आक्रमन्ते शक्ररथसविधम् ॥४२॥

नारदः—स एष नमुचिः, बलिस्ताविमौ जम्भपाकजौ[8] ।

---

१. ंगचडा…लण; २. ०भयंनं; ३. ०ज्वाल०; ४. चाष्टोऽसौ; ५. बलिमायिक० ।
६. ०विदंलयेदम् विमृशत्युप०; ७. ०सारा:; ८. जम्भ……पावको ।

**शिष्यः**—तहा[1] कहिं एंकपदं एव्व सरिवेहिं अहिउत्तो महालादो[2]।

( छाया ) [ तदा कथमेकपदमेव सर्वैरभियुक्तो महाराजः। ]

**नारदः**—

बलिपाकजं नमुचीनपि क्षणात्
छलमान्विधाय जनितरोषतुष्मणि।
हरनेत्रपावकपराक्रमं द्रुतं[3]
हरति प्रतापमहसा हरिस्स्वयम् ॥४३॥

**शिष्यः**—कदमा खु एदे विलं पुडं तमन्तइमण्डलीपंचंडेण रहमण्डलेणि असुलाणि वलंविन्दावेंदि।

( छाया ) [ कतमाः खल्वेते परिस्फुरन्मार्तण्ड[4]मण्डलवीचिप्रचण्डेन रथ[5]मण्डलेन असुराणां बलं विद्रावयन्ति।

**नारदः**—एते खलु महात्मानः दिशामधीशाः मरुतामीशस्य सहायतामुपशासते। तथा हि—

ज्वालाजालावलीढा विदलितवपुषश्चण्डदण्डप्रहारै-
र्जीवग्राहं गृहीता जलधरपटलं प्रापिता विप्रकृष्टाः।
निस्त्रिंशोद्भिन्नदेहा निरवधि[6]निपतच्छूलविच्छिन्नकण्ठा
दिक्पालैर्दैत्यपाला[7]दिशि दिशि मुखरा निर्जरा र्भजिताश्च ॥४४॥

किञ्च—

दग्ध्वा मासं शराग्नावविरलनिपतज्ज्वालजालानुकूले
जग्ध्वा सार्द्धं प्रियाभिर्लुलित[8]मथ वसामज्जमस्तिष्कसारैः।
बद्ध्वा [9]भीलास्त्रमाला गलभुवि विगलद्दानवां[10]गोपसृष्टा
बुद्ध्वा सत्राङ्गणं तद्रणकलमधुना हन्त, दृश्यन्ति भूताः ॥४५॥

निर्माय निर्माय बलं बलीन्द्रं
धर्माय धर्माय नगान् प्रदृश्य।
देवेन देवेन तयान्वितेन
जीवेन जीवेन स मोचितोऽभूत् ॥४६॥

**शिष्यः**—द्राणि अह्मिदा जीविदह्म।

( छाया ) [ इदानीं वयम् उज्जीविताः स्मः। ]

**नारदः**—न केवलं वयमपि, त्रैलोक्यमपि।

---

१. चदि; २. महादो; ३. हरति; ४. ०मातण्ड०; ५. कथं; ६. ०निरधि। ७. ०थालाः; ८. ०भिलुलित०; ९ .बव्वा; १०. ०दानवाणां।

( नेपथ्ये )

हन्त—

राहूर्मूर्धावशिष्टो ग्रसति कटुरुषा नैजपीयूषपान-
प्रत्यूहापादिसंज्ञाकरणपरिणतौ बिन्दुमीरे[1] जलन्धू ।

शिष्यः—अच्चाहिदे, अच्चाहिदे ।

( छाया ) [ अत्यहितम्, अत्यहितम् । ]

नारदः—श्रोतव्यमुपर्यपि ।

( पुनर्नेपथ्ये )

दृष्ट्वा तत्क्रोधकष्टं त्वरितकृतवसोष्टादिनिष्ठागरिष्ठैः
स्नानध्य नग्रदानैरपि बलकरणै[2]र्द्रावितौ तौ वदेतौ ॥४७॥

शिष्यः—पिअअं णो पिअअं णो ।

( छाया ) [ प्रियं नः, प्रियं नः । ]

किण्णु खु एदे इसिणोरा अआअं- चंदि महेन्दं ससआसे ।

( छाया ) [ किन्नु खल्वेते ऋषय इवागच्छन्ति महेन्द्रस्य सकाशम् । ]

नारदः—एते महर्षयः महाराजस्य पट्टाभिषेकोत्सवघटनायायान्ति । तद्वय-
मप्यभ्यन्तरीभवामः ।

शिष्यः—तहा ।

( छाया ) [ तथा । ]

( इति निष्क्रान्तौ )

( ततः प्रविशति महेन्द्रः साङ्गिरसो[3] महर्षयश्च । )

महर्षयः—

यत्ताप[4]सम्पत्प्रवणाशराली
दुश्शासनायासभवं पृथिव्याः ।
विद्रावितं तच्च भवत्प्रयुक्तं
पट्टाभिषेकोत्सवनौकपूरैः ॥४८॥

आङ्गिरसः—सत्यमेतत् ।

सन्धित्सावशगाश्च दैत्यनिचया मायावशाश्शार्ङ्गिणो
मन्थानाचलतः कृतो जलनिधेर्मन्थप्रयत्नो महान् ।
प्राप्तं द्रागजरामरैव[5] विभवं पीयूषमव्याहतं
निर्जित्यारिचमूनकारि मुनिभिः पट्टाभिषेकोत्सवः ॥४९॥

तदद्य किल मर्षितैवावलम्बनीयं किल महाराजेन ।

१. ०नीरे०; २. ०लनैर्द्राविमु०; ३. ०ाङ्गिरसा; ४. ०त्तापसम्प्रवणमा०; ५. ०रैक।

महेन्द्रः—यद्रोचते तत्रभवताम् ।

महर्षयः—किमादिष्टमाचार्येण ? निश्शात्रवेन्द्रधनतया स्वयमेवोपशाम्यति क्रोधज्योतिः । तथा हि—

पलायितास्सम्प्रति शात्रवा ये
प्रणष्टभद्राः पुरुषोत्तमेन ।
प्रसादतस्तस्य[1] विसारिकीर्तेः
कृतापसम्पत्सफला भवन्ते ॥५०॥

आङ्गिरसः—अथ किम् ? सर्वमपि पुरुषोत्तमसहायतायुजो महेन्द्रस्य सुघटमेव ।

( नेपथ्ये )

प्रियं नः ।

महेन्द्रः—सर्वेषामपि सुराणामेतदामोदमेदुराणामुपन्यासः ।

आङ्गिरसः—भवतु । किं ते भूयः प्रियमुपहरामि ?

यत्सन्धिर्विजयद्रुहां यदपि वा मन्थस्सुधावारिधे-
र्यच्चात्यद्भुतवस्तुलाभसहितं पीयूषसम्पादनम् ।
यद्वैरिव्रजखण्डनं यदपि वा साम्राज्यधौरन्धरी
तत्सर्वं मम लब्धमादरयुजा भावत्कलोलादृशा ॥५१॥

तथापीदमस्तु भरतवाक्यम्—

नित्यं नृत्यतु सम्मुखाम्बुजवने साहित्यधौरन्धरी[2]
यस्तत्पालयिता तदीयसदने लक्ष्मीः स्थिरा वर्त्तताम् ।
धारासारमुचस्सदा जलधराः सम्मोदमातन्वतां
एतल्लोकमवोढविप्लवदशाबाधापनोदोचितम् ॥५२॥

( इति निष्क्रान्तास्सर्वे )

॥ इति श्रीवेङ्कयार्यविरचिते महेन्द्रविजयाभिधाने डिमे चतुर्थोऽङ्कः समाप्तः ॥

---

यश्श्रीरामपुरी विलासवसतिः श्रीरामलीलेक्षण-
प्राप्ताखण्डितपाण्डितीविलसनष्षड्दर्शनीवल्लभः ।
तस्येयं सुकवेः कृतिर्विजयतां श्रीवेङ्कयार्यस्य या
सद्यो जृम्भितगुम्भितप्रविलसन्मल्लीमतल्लीप्रिया ॥५३॥

॥ इति श्रीवेङ्कयार्यविरचितः महेन्द्रविजयाभिधानो डिमः सम्पूर्णः ॥

---

१. ०स्तस्त्व०; २. ०धुरी ।

श्रीवेङ्कटवरदाचार्यविरचितः

# श्रीकृष्णविजयः

## प्रथमयवनिका

॥ श्रीमते हयग्रीवाय नमः ॥

श्रीमान्पातु सदा युष्मान् श्रीमुष्णपुरनायकः ।
श्रितानां यस्तु मन्दारः श्रृङ्गारधृतभूस्स्वयम् ॥ १ ॥

अपि च—

श्रीमान् श्रीमुष्णनिलयः श्रीधरः सद्गुणालयः ।
उन्निद्रयतु भद्राणि नयमुद्राणि नः प्रभुः ॥ २ ॥

( नान्द्यन्ते सूत्रधारः )

सूत्रधारः—( सहर्षं, सर्वतः चक्षुः प्रसार्य )—अहो, महानयं गुरुप्रसादः, येन सकलविद्यावतां विदुषां मुदे सदैवमस्मत्कुलविद्यावैशद्यं निगद्यते ।

( इति पुष्पाण्यादाय अञ्जलिं बद्ध्वा )

अस्ताशेषजनार्तिरम्बरमणिप्रस्तारवास्तुप्रथ-
स्त्रस्तात्यन्तकृता[1]दरोऽस्ति हि रमा विस्तारितार्धस्मितिः[2] ।
व्यस्तात्यद्भुतसद्गुणं निजपदन्यस्तात्मभारं गुरुं
मस्तायै मम वीक्ष्य यः किरिवरस्सस्तात्पुरस्तात् सदा ॥३॥

( इति निजदेवतां स्वगुरुसहितामभिष्टूय )

माद्यन्मधुव्रतकुलावृतकेसरौघं[3]
माकन्दबिन्दुबहुसुन्दरपत्रवृन्दम् ।
दिग्गर्भगर्भितनिरन्तरदिव्यगन्धं
पुष्पाञ्जलिं परिगृहाण पुराणमूर्ते ॥ ४ ॥

( इति पुष्पाञ्जलिं विकीर्य नेपथ्याभिमुखमवलोक्य )

---

१. ०दारो०; २. ०र्थस्थितिः; ३. ०व्रजवृतावृतकेसरौघं मारुन्दबि० ।

अयि प्रिये, सत्वरं त्वया अलङ्क्रियतामियमार्यसभा ।

(प्रविश्य) नटी—(सारविन्दनयनमुखभ्रमरस्पन्दधृतिविकासम्)—

अय्य, पुणं मण्णोण्णा तुंभंणाधणाएभरअकं णाए सममएधिदसुमण-सस्ससिससआभरणीकुणंज्ज आणवेदु आभण्णक्कं जं महमहाभिसइदो-जन्धनपं ।

(छाया) [ आर्य, प्रज्ञा[1]मनोज्ञ त्वदाज्ञाकृतज्ञतया धन्यया भरत-कन्यया स मया धृत[2]सुमनसः सरसः श्रीशिरसो आभरणीक्रियते । आज्ञापयत्वाह्वानकार्यम्, यन्महन् महातिशयस्तत्रभवान् । ]

सूत्रधारः—(सशिरःस्पन्दं, सान्तर्हासं च) –प्रिये, शृणु । फलितमस्मद्-भागधेयेन, यतः—

सतां गुणानां सहितैस्सहितैश्च गणैर्बुधैः ।
आदिष्टोऽस्म्यहमाश्चर्यरूपकं दर्शयेति नः ।। ५ ।।

सत्कवीन्द्रपरिग्राह्यं सन्दर्शयत भरतर्षभाः ।
सभायां वेङ्कटेशस्य पद्मसद्मप्रियापतेः ।। ६ ।।

नटी—(सस्मितम्) –अय्य, आरुहदि खु एदाए सभाए सभाणाअ अवत्तण्णं सिरणिवासस्स जोह सत्तभामासमेदो विसअलगुण-रामोण अपारिजाओ विभिसमपारिजाओ णिसकपडाण दाविअणि-सक्कपडण्णदादाअ बाहुप्पहल्लादसम्पदाओ भिविनिद्धिकरो विणस-साहु आरंणदादाअणमज्जणपियो विमज्जणपिअपि ।

(छाया) [ आर्यार्हति खलु एतायाः सभायाः सभानायकत्वं श्रीनिवासस्सह[3]'यत्सत्यभामासमेतोऽपि', सकलगुणरामः,नतपारिजातोऽपि[6] [7]भृशमपारिजातो निष्कपटान्नदाताऽप्यनिष्कपटान्नदाता च साधुप्रह्लाद-सम्पदभिवृद्धिकरोऽपि, न साधुनरान्नदाता च विद्वन्नमज्जनप्रियोऽपि मज्जन-प्रियोऽपि[8] । ]

सूत्रधारः—(सश्लाघम्) –भद्रे, त्वदभिहितमन्वर्थमेव । पश्य —

सारासारविवेचनादिचतुरास्सामाजिका यत्र ते ।
सैवेयं हि सभा च नायकमणिर्यत्सत्यभामापतिः ।
कर्त्ताऽयं[9] कृतिनां वरः, कविरमी शक्ताः प्रयोगे प्रिये,
यज्ञोऽप्येष[10]न तत्कथं विरचयेत्सार्थं मया चिन्तितः ।।७।।

---

१. प्रज्ञान०; २. ०मया; ३. सुमनसः सिरस०; ४. ०स्य यस्स०; ५. ०तापि । ६. ०तोपि; ७. ०ताप्य०; ८. मज्जमप्रि०; ९. ०कर्तायं; १०. यज्ञोप्येष ।

कर्त्ता वेङ्कटदेव[1] सम्प्रतिकविर्नाटचं कथं तैर्विना
को वा तिष्ठति देवलाकुलपतिः श्रीमाञ्जगन्नायकः ।
अर्चयस्स[2]र्वजनैरनन्यविभवश्श्रीवेङ्कटेशो प्रभुः
श्रीकृष्णाख्यजयं डिमो विजयते धन्या वयं सर्वतः ॥८॥

**नटी—** ( सभक्तिपुलकम् )—णाह, तुह अवणं महमणं अभिमुहुरं मुहुरेइ । किं अण्णो वो अच्चाओ आरमंझंमिविभाओवआर[3]लीला[4]आदणेइं जो सअल[5]सुइजुवइसिरोरअणं ।

रसो जोणि विच्च[6]सरसो सरसो [7]पच्छिमे तडे ।
जहिं विसामिसरसा सो तहव्व विराजइ ॥ ९ ॥

अदो अम्माणं तुग्गरआएफरिअं ।

( छाया ) [ नाथ तव वचनं मम मनोमुकुरं[8] मुखरयति,, किमन्यः को [9]वाऽर्चावतारमध्ये विभावादरलीलामातनोति, यस्सकलश्रुतियुवति-शिरोरत्नम् ।

रसो यः[10] नित्यसरसस्सरसः पश्चिमे तटे ।
यथैव स्वामिसरसस्सः[11] तथैव विराजते ॥१०॥

अतोऽस्माकं तूदग्रभाग्यं तथाफलितम् । ]

**सूत्रधारः—** ( सविमर्शम् )—भवत्या भारत्या भवितव्यम्, सम्यक् सभा-नायको वर्णितः ।

**नटी—** ( [12]सस्मितमधुराधरम् )—अय्य, तुए चतुराणणेण होतव्वम् । किं णाम रूअअं तं केण किं वा लेदं जं सपओ एण अइयरसि आणन्दं संपादोम्म ।

( छाया ) [ आर्य, त्वया चतुराननेन भतिव्यम् । किं नाम रूपकं, तत्केन कृतं, यस्य प्रयोगेणाद्य रसिकानन्दं सम्पादयामः ? ]

**सूत्रधारः—** ( सोल्लासरोमाञ्चम् )—

आकर्ण्यतां तदिदमम्बुजलोचनास्ये
दास्ये न कापि सदृशी तव दृश्यतेऽद्य ।
रूपेण गीतिकलनेन च नर्तनेन
लक्ष्म्या गिरा रसिकया सहनेन शक्त्या ॥११॥

---

१. त्रुटितः; २. अर्च्यः सर्व०; ३. ०वादर०; ४. लील; ५. ०सअक० । ६. जोणिच्च०; ७. ०पच्चिमे; ८. ०मधुरं; ९. वार्चा०; १०. ये; ११. ०स । १२. स्मितमधुराधरम् ।

कवेरस्य कवेरस्य कन्याकत्रातिवागिव ।
वंशप्रकाशको यस्य स सुशीलो महामुनिः ॥१२॥

आदौ पङ्कजनाभतो विधिरभूत्तस्मादनेके जनाः
स्मर्त्तारो मुनयश्च वैदिकमहामार्गप्रतिष्ठापकाः ।
कौण्डिन्योऽस्ति हि कश्चिदत्र महतामग्रेसरः श्रीधरो
यत्पुत्रा बहवोऽभवन्क्षितितले नानामतस्थापकाः ॥१३॥

तस्मात्स्मार्तविचक्षणः श्रुतिशिरो युग्मार्थदः श्रीधरः
श्रीरङ्गेशकृपाकटाक्षविषयः श्रीभूवराहप्रियः ।
यश्श्री[1]वेङ्कटशैलनाथकरुणापात्रं पवित्राकृति-
स्तद्वंश्यो वरदो गुरुर्यतिपतेश्शिष्याग्रणी राजते ॥१४॥

जयन्ति गुरवो यस्य पूर्वे विख्यातवैभवाः ।
तेषां शिष्यतयाऽनेके जातास्सन्ति सहस्रधा ॥१५॥

श्रीमद्रामानुजमुनेर्दासं वीरलताङ्कितम् ।
कौण्डिन्यमाद्यमस्माकं गुरुं वरदमाश्रये ॥१६॥

(इत्यनेन स्वगुरून् प्रशस्य)—अतः परं पूर्वोत्तरस्थितगुरुवंश[1]जनानां प्रकाशकश्लोका विलिख्यन्ते—

श्रीमान् श्रीपृतनापतिश्शठरिपुर्नाथो मुनिर्नायकः
रामो यामुनयोगिराडपि महापूर्णो मुनिर्लक्ष्मणः ।
कौण्डिन्यः करिशैलराडिति च तौ श्रीवासवर्यार्थदः
सद्वन्द्यः श्रुतिशीललक्ष्मणगुरुः बुद्धिप्रदाश्चेत्यमी ॥१७॥

श्रीनारायणवासवाञ्छितकरश्रीश्रीनिवासादिकै-
रस्माकं गुरवो[2] विभान्ति बहवो वृद्धाः प्रसिद्धा भुवि ।
एतेषां तनया विभान्ति सकलास्सम्प्राप्तप्राप्तश्रियः[3]
श्रीरङ्गादिपदेषु[4] येषु भगवान् प्रीतिं विधत्ते हरिः ॥१८॥

एतेषां वीरवल्लीगुरुसन्तानपीठस्थितानां गुरूणां मध्ये श्रीरामानुज-कौण्डिन्यश्रीवीरवरदाचार्य इति प्रसिद्धो जयति । तमेवाह—

---

१. ०वंशजगाम्; २. ०वोऽपि विभान्ति; ३. ०सर्वश्रियः; ४. ०पदे येषु ।

जगति जयति कश्चिच्चित्रचर्यो विपश्चित्
प्रवरगुरुयतीन्द्रप्रेषितो[1] भूमिचन्द्रः ।
सकलसुगुणबन्धुस्सर्वलोकैकबन्धु-
र्वरदगुरुवराख्यो वाग्विलासाभिमुख्यः ॥१९॥

तदभिमततनूजस्सत्कलानां समाजे
श्रितबुधशतवन्द्यः श्रीवराहाभिवन्द्यः ।
जयति भुवि सुमूर्तिर्देशिकोत्तंसकीर्ति-
र्विमलसुगुणधुर्यो वीरवल्ल्यप्पलार्यः ॥२०॥

श्रीमत्कौण्डिन्यगोत्राद्वरदगुरुवरात्सर्वधार्याख्यवर्षे
तिष्ठत्यर्के तुलायां यदुकुलतिलकः[2] श्रीहरेस्तारकायाम् ।
श्रीमान् जातो विभाति प्रवरगुणनिधिः श्रीनिवासार्यवर्यः
श्रीरब्धे[3] कौस्तुभाख्यो मणिरिव महतामुत्सवाय श्रियै नः ॥२१॥

शास्त्रे शास्त्रे सङ्ग्रहीतार्थकर्ता
पात्रे पात्रे सर्वविद्याप्रदाता ।
श्रीवासार्यसाहितीसारधुर्यः
श्रीमद्रङ्गे राजते राजपूज्यः ॥२२॥

कर्णाटसिंहासनभूमिपालै-
स्सम्मानितो हाटकशाटकाद्यैः ।
सुनाटकाद्यैः स्वकृतैः प्रबन्धै-
रानन्दयत्यार्यजनानशेषान् ॥२३॥

श्रीरङ्गाख्य[4]प्रभृतिगुरुभिः पूजितः पालितोऽसौ
प्रौढश्शास्त्रे परहितपरो रञ्जको मञ्जुसूक्त्या ।
साहित्यैकप्रथममहितस्सर्वभाषाप्रबन्धैः
श्रीवासार्यो जयति भुवने वीरवल्लीकुलेजः ॥२४॥

अस्य वृद्धपितामहः सप्त[5]पुरुषात्पूर्वं स्थितोऽनेन प्रकाश्यते—

सौम्योपयन्तृयतिराजवरप्रदार्य-
पादारविन्दविनिवेशितसर्वभारम् ।
कौण्डिन्यवीरलतिकाकुलपद्ममिश्र-
मस्मद्गुरुं वरददेशिकमाश्रयामः ॥२५॥
नारायणार्यनप्तारं श्रीनिवासार्यपौत्रकम् ।
वरदाचार्यजातं त्वामप्पलाचार्यमाश्रये ॥२६॥

---

१. ०प्रेपित०; २. ०तिलक; ३. राब्धेः; ४. रङ्गार्याख्य०; ५. स प्र० ।

अनेन प्रतिपादितादप्पलाचार्याद्वेङ्कटवरदाचार्यो नाम कश्चिद्बालविपश्चिदाविरासीत्। तेन कृतोऽयं प्रवन्धः 'श्रीकृष्णविजयः' नामा डिमः। तेनैव सर्वानानन्दयिष्यामः।

**नटी**—( सविमर्शम् ) अय्य, तंतह होदु नाम, डिमलक्खणं दु पअडी उरुं।

( छाया ) [ आर्य, तत्तथा भवतु नाम। डिमलक्षणं तु प्रकटीकुरु।]

**सूत्रधारः**—( साभ्युपगमम् ) आर्ये, शृणु। तत्तु डिमाख्यं रूपकम्—

**शृङ्गाररौद्रयुक्ता हि कथा यत्र प्रवर्त्यते।**
**डिमश्चोद्धतपात्राणां कृतिर्जानाति शास्त्रविद् ॥२७॥**

**नानाप्रसङ्गसहितं बहुधा च कविस्तुतिः।**
**विष्कम्भचूलिकाङ्काः स्युश्चत्वारो षड् वा परैः ॥२८॥**

इति लक्षणम्। इति कर्णपाशादिभिर्डिमलक्षणं कृतमिति जानीहि। श्रीकृष्णविजयाख्यो डिमो अत्रैव वर्तते।

॥ अत्र विष्कम्भचूलिका नामार्थोपक्षेपकः ॥

**नटी**—( अञ्जलिं बद्ध्वा ) अय्य उत्त, ममं गेण धारिदं तुमं वअणं। तदो तदो ?

( छाया ) [ आर्यपुत्र, ममाङ्गेण धृतं तव वचनम्। ततस्ततः ? ]

**सूत्रधारः**—किमन्यत्, इदं पुनरवशिष्यते—

तस्य त्रिपुरुषात्पूर्वं कूटस्थोऽनेन[1] कथ्यते।
कौण्डिन्यवीरवल्लो वरदाचार्यं गुणाकरम् ॥
श्रीरङ्गनगरीनाथं श्रीनिवासं गुरुं भजे ॥२९॥

किञ्च—

**श्रुतीनां सर्वासामनुपदविशेषार्थघटकः**
**कवीनां पूर्वेषां कवयति गिरां तुलयति च यः।**
**यजुश्शाखाध्यायी शुभमतिरयं श्रीनिधिकविः**
**प्रधानं नाट्येषु विलसति यशो यस्य[2] सुगुणः ॥३०॥**

---

१. ०थः अनेन; २. सुयस्य।

मदनुजोऽपि[1] विभाति शुभोदयः
सकलवैदिकलौकिकसारविद्[2] ।
[3]सुहृदशेषजनस्य निसर्गतः
स जय लक्ष्मणसूरिवराह्वयः ॥३१॥

अनेन श्रीवेङ्कटेशविषयका बहवः प्रबन्धाः कृताः। तेषां नामानि कथ्यन्ते—१ श्रीनिवासचरित्रम्, २ श्रीनिवासकुशलाब्धिचन्द्रिका, ३. श्रीनिवासचरितामृतार्णवः, ४. श्रीदिव्यदम्पतिवरस्तवः, ५. अत्रिकामकल्पवल्ली, इत्यनेन कृतानि। क्रियमाणानि च कल्याणसाधिकादीनि। करिष्यमाणानि चानेकप्रबन्धजातानि प्रकाशन्ते। एतानि कवेरस्य कनिष्ठभार्यात्मज-श्रीनिवासाचार्यचरित्राणि कथितानि। [4]अस्याद्यजायात्मभवाप्पलार्यतनयौ द्वौ वरदौ शठारी। अस्य चत्वारो भ्रातरः। तेऽपि विद्यावृत्तकुलाभिमान-करुणासम्पत्प्रतिष्ठाश्रया भासन्ते। तथा हि—

श्रीमद्राघवदेशिका गुणवराः श्रीरङ्गदेशे स्थिताः
श्रीवासार्यमुखास्सुखायनगुणाः श्रीशैलनाथात्मजाः।
श्रीकृष्ण[5]द्वयरङ्गदेशिकसुतास्तज्जाश्च तज्जा इमे
श्रीवेङ्कटवरदार्यबालवनिताः[6] पुत्राश्च लक्ष्मीपुरे ॥३२॥

श्रीविष्णुवंशद्रुमवेल्लिता ये
गुर्वक्षवीक्षामृतवर्धिताश्च।
तत्तद्गुरुस्थानकृतालवालाः
विभान्ति सत्कार्यलताः फलाढ्याः ॥३३॥

किञ्चायं विद्यारण्ये सर्वशास्त्रोपस्थितिसमये चानिरवधिकसम्पन्निधिरतानीद् गन्धसन्ततिम्। इदानीं तु सप्ततिवयाः। तत् श्रीकृष्णविजयं प्रबन्धं कृतवानिति श्रूयते मया।

**नटी**—( विहस्य )—अय्य, तइ ण चिन्तिदं तन्ध होदा दोहा अण्णाणं तुए कहिदं एदं एदाणं दु आजमहिपसादाणंभगवोद्राणं पसव्वाणत्तणं ण विरमइ एदत्तादपादेहिंअसियजुणअअणेअ पवन्धाणा किदा। दे सव्वेहिं विवेदिट्ठा सुदेहिं अ अम्हेहिम्।

---

१. मदनुजोपि; २. ०वित्; ३. सहृ०; ४. अस्मा०; ५. ०कृष्णा०।
६. ०पाः।

( छाया ) [ आर्य, तथा न चिन्त्यं तत्रभवता । अन्येषां त्वया कथितमेतत् । तेषां त्वार्यमहितप्रसादानां[1] भगवतां सर्वज्ञत्वं न विरमति । एतत्तातपादैरशीतिवयोभिर्वृद्धैरनेके प्रबन्धाः कृतास्ते सर्वेऽपि दृष्टाः श्रुताश्चास्माभिः । ]

**सूत्रधारः**—( सस्मरणम् ) आर्ये, विस्मृतं मया त्वदधरसुधापानमत्तेन चित्तेन । किञ्च, त्वन्नयनवैशाल्य-स्तनस्थौल्य-जघनवैपुल्य-मध्यसौक्ष्म्य-नितम्बोन्नत्य-गमनगाम्भीर्य-वाङ्माधुर्य-देहरूप-लावण्य-सौन्दर्यवदनौदार्य-रोमरेखाविराजादौदर्यावलोकनपारवश्येन । तन्माहात्म्यं वदामि । शृणु, साक्षाद् भगवदंश एव हि श्रीनिवासमहागुरुः तथा स्वप्नदर्शनादतिमानुषचरित्रत्वाच्च तादृशकविमध्ये अयमेक एव प्रतिभाति । यथा—

त्रय एव हि लोकेऽस्मिन् कवयो बुधसम्मताः ।
प्राचेतसो मुनिर्व्यासः श्रीनिवासगुरूत्तमः ॥३४॥

यत्सूक्तिपद्धतिरियं स्मरामि । तत्सर्वं श्रूयताम् । आदौ—१. अम्बुजवल्लीपरिणयम्, २. भूवराहविजयः, ३. अनङ्गमङ्गलम्, ४. अष्टपदिकम्, ५. कविवृत्तम्, ६ अलौकिककाव्यमालिका, ७. वराहचम्पू, ८. वकुलमालिनी, ९. गीतापरिणयम्, १० सीतादिव्यचरित्रम्, ११. भारतचन्द्रिका, १२. सारसङ्ग्रहः, १३. मूलव्याख्यानम्, १४. मीमांसासारसङ्ग्रहः, १५. वेदान्तसारः, १६. अम्बुजवल्लीदण्डकम्, १७. श्रीवराहचूर्णिका, १८. ध्यानचूर्णिका, १९. श्रीरङ्गदण्डकम्, २०. चूर्णिकाकीर्तनानि, २१. श्रीरङ्गराजचरितम्, २२. गानपदपदानि, २३. वर्णसप्तकम्, २४. गोपी[2]नाथीयव्याख्यानम्, २५. भूवराहविजयव्याख्यानम्, २६ माघरघुवंशम्, २७. नैषधम्, २८. श्रीरङ्गराजस्तवः, २९. यामुनस्तुतिव्याख्यानानि । ३०. रहस्यरत्नम् । एतानि मया दृष्टानि उक्तानि च । अन्यानि तत्कृतभगवत्कार्याणि ग्रन्थजातानि च सन्त्येव । तत्सर्वं मया न ज्ञायते, न कोऽपि तन्महिमानं वेत्ति च । ततः श्रीनिवासगुरोर्महत्ता श्रीनिवासस्येव सर्वज्ञता च सार्वभौमी ।

---

१. भगवत्प्रसादानां; २. ०नाथीय ।

श्रीमत्कौण्डिन्यवरदनारायणगुरोस्सुतम् ।
श्रीनिवासगुरुं वन्दे तदायत्तस्वरूपकम् ॥३५॥

( इति वदन् शिरस्यञ्जलिमाधाय प्रणमति )

**नटी**—( साभ्युपगमम् ) अय्य, तस्स पुत्तस्स वरददेसिअस्स किदओ णोदिओ तुमं एता अहिं वदेमि । सुणु—

( छाया ) [ आर्य, तस्य पुत्रस्य वरददेशिकस्य कृतयो नोदिता भवता । तामहं वदामि । शृणु— ]

( संस्कृतमाश्रित्य )—१. लक्ष्मीनारायणचरित्रम्, २. रघुवीरविजयः, ३. कमलनयनचर्चा, ४. रामायणसङ्ग्रहः, ५. गद्यरामायणम्, ६. शब्दमाहात्म्यम्, ७. औकदर्पणम्, ८. अम्बुजवल्लीशतकम्, ९. श्रीवराहशतकम्, १०. प्राकृतरत्नाकरम्, ११. स्मृतिसारः, १२ रहस्यरत्नम्, १३. श्रीरङ्गराजश्रीरङ्गनायिकादशकम् इत्यादिप्रबन्धजातानि कृतानि । तानि क्रियमाणश्रीकृष्णविजये निर्दशितानि । करिष्यमाणानि बहूनि सन्ति वेदोक्तप्रकाशादीनीति उक्तानि चेत्, ततोऽपि बहून् ग्रन्थान् करिष्यामीति प्रतिश्रुता ।

**सूत्रधारः**—अयि, त्वया सम्यगुचितमेव वचनमापतितम् ।

वकाररेफमध्यस्थनकारान्वितबोधकाः ।
वरदं कामयन्त्येता[1]स्त्वदन्यास्तादृशाननाः ॥३६॥

ततो वीरवल्लीकुलसम्भूतानां परम्परासम्प्राप्तसमानविद्यानां गुरूणां माहात्म्यमियत्तदा वक्तुं न शक्यम् । अतोऽस्मत्भाग्यवशाल्लब्धमिदं सकलगुणनिरूपकं रूपकम् । अत एतत्प्रयोगेन सभाजनानानन्दयिष्यामि ।

( इति तस्याः कण्ठे सभानायकेन दत्तां नवरत्नमालिकामपि हृदयहारिणीं बध्नाति )

**नटी**—( सभक्तिपुलकम् ) अय्य, महंदो इमो परितोसिओ तुए दत्तो । तहव्व करेह्रम् । अह्मं गुरुमाहप्पदवेसवणेण–यण्णं जहमसुसिअलं अहिअअ जादो हि णे पुत्तवोकिणिति[2] णाम हेअं अस्स रूपअस्स[3], जेण सव्वाणं दणं करेइभवं ।

( छाया ) [ आर्य, महानयं पारितोषिकस्त्वया दत्तः । तथैव कुर्मः । तथैव अस्मद्गुरुमाहात्म्यश्रवणेन—

---

१. ०तदन्या०; २. इति; ३. यस्स ।

'धन्यं जन्म सुशीतलं च हृदयं जातश्च नेत्रोत्सवः'। किमिति नामधेयमस्य रूपकस्य, येन सर्वानन्दनं करोति भवान् ? ]

**सूत्रधारः**—( साश्चर्यं विहस्य ) अहो, तारुण्यमेव तरलयति हृदयं युवतिजनस्य। पूर्वमेवोक्तं खल्वस्य नाम 'श्रीकृष्णविजयः' इति।

**नटी**—( सस्मरणम् ) अय्य, आम, आम। तह, विसअएव केवलं विसुमरणसीलो [1]किल कामिणीलोओ तहविणवरअणमालिआधारणगव्वेण। अदिठूलेणणअणभरेण अक्कंछंहियं एय्यदि[2] गूढं जादं।

( छाया ) [ आर्य, आम्, आम्। तथापि स्वयमेव केवलं विस्मरणशीलः किल कामिनीलोकः। तथापि नवरत्नमालिकाधारणगर्वेणातिस्थूलेन स्तनभरेण चाक्रान्तं हृदयमिति मूढं जातम्। ] ( संस्कृतमाश्रित्य )—

दधीचिरसुदाताभूदप्रदाताभवद् धनः।
महाबलिरदाताभूत् त्वयि दातरि भर्तरि ॥३७॥

( सप्रत्यभिज्ञम् )—अस्स रूपअस्स पयोएण सअलगुणभाअणं सभाअयं सभामिणं विजोसेमि। किं विक्केवेण।

( छाया ) [ अस्य रूपकस्य प्रयोगेण सकलगुणभाजनं सभाजनं सभामिमामपि तोषयामि। किं विलम्बेन ? ]

**सूत्रधारः**—अयि, न कोऽपि विलम्बः। समया च नाट्यसामग्री सम्पन्ना। पश्य—

वाणी श्रीवरदार्यदेशिकगुरोर्वेणी सुधानामियं
नाणायस्तनभारनम्रिततनुःश्रेणी गुणानां सताम्।
नाट्येऽहं चतुरो मधुश्च समयो धन्या गुणेऽन्या[3] इमे
सभ्यानां परिषत्सभापतिरयं श्रीवेङ्कटेशस्स्वयम् ॥३८॥

**नटी**—( सशिरःकम्पम् ) णाह, सुघटीअं सव्वं अम्हमगुरुप्पसादणा इअं पत्थावणा अभिसलक्खाणिरुविदा तुए कुसीलवकुञ्जलेण।

( छाया ) [ नाथ, सुघटितं सर्वमस्मद्गुरुप्रसादात्। इयं प्रस्तावनाऽत्र विस्तारेण सलक्षणा निरूपिता त्वया कुशीलवकुञ्जरेण। ]

( नेपथ्ये )

मदकलः कलभः कलभैरवैरलुलितालकपालिमिलां वधूम्।
क्षितिभृदालयमेत्युपलालयन् सकलतीर्थनिषेवणवाञ्छया ॥३९॥

---

१. ०की०; २. संय्यदि; ३. गुणेन्या।

( पुनर्नेपथ्ये )

श्रीमत्कृष्णमुखारविन्दगलितां पीत्वा सुधां तत्कथां
तीर्थान्यायतनानि जह्नुतनया मुख्या नदी श्रीहरेः ।
दर्शं दर्शमहो निमज्य सततं प्राप्तं यशो निर्मलं
प्राप्तं द्वारवतीसमीपमधुना [1]धन्योऽहमासं पुनः ॥४०॥

( पुनर्नेपथ्ये )

ब्रह्मन्, पुष्पधनुः प्रसूनकलिका बाणाहताः पण्डिता
मुह्यन्त्यत्र मुहुर्मुहुर्मृगदृशामुत्तुङ्गसङ्गार्थिनः ।
अन्ये वन्यफलाशिनोऽपि यमिनः संन्यासिनः कामिनः
कान्ताचारुपयोधरोरुयुगलध्यानाभृताभ्यन्तराः ॥४१॥

सूत्रधारः—( श्रवणमभिनीय )

सुख्यं सुख्यं को न बिभ्रेन्नृपः स्याद्
नो चेद्राजा मानसेनासमेतः ।
दृष्ट्वा सर्वं भूतलं सद्विशालं
प्राप्तं श्रीमान् [2]द्वारिकाद्वारसीमाम् ॥४२॥

अतो वेषभाषाद्यनन्तरकरणीयायावामपि सज्जीभवावः ।

॥ इति प्रस्तावना ॥

( ततः प्रविशति सशिष्यः सिंहस्कन्धः )

सिंहस्कन्धः—( विभाव्य, सहर्षम् )—

श्रीमद्रङ्गनिधिं श्रमापहपतिं गोविन्दमिन्द्रार्चितं
श्रीमच्छार्ङ्गधरं सुदर्शनवरं श्रीराजगोपं हरिम् ।
हस्तीशाद्रिवृषाद्रि-यादवगिरि-श्रीसुन्दराद्रीश्वरैः
श्रीमत्केसरभूषणं कलिजितं श्रीभाष्यकारं भजे ॥४३॥

इति वदन् नेत्रे स्पृष्टमुन्मील्य, समन्तादवलोक्य—अहो, सरसीरुहसमयः[3] सम्प्राप्तः । तथा हि—

काव्यालोकः[4] कलयति सतां कामिनीकामवृत्तिं
कान्तारद्रुततमतमः क्वापि निर्वापितं च ।
अभ्रं शुभ्रं बहुभिरुदसूत्काश्यपैः[5] कान्तिजालैः
कान्तासक्ताः कथमपि बहिर्कामुकानि स्मरन्ति ॥४४॥

---

१. धन्योह०; २. द्वारका०; ३. समयस्; ४. काव्यलोकः; ५. ०पैः ।

( नभोऽवलोक्य )—

उदितः खलु उदयगिरिकन्दरान्तीरन्ध्रबहुलान्धकारगन्धसिन्धूरकुण्ठीकरणकण्ठीरवः, सकलकोकमिथुनविरहशोकशिखरिविदलनदम्भोलिकेलिः, उद्दण्डोऽस्त्रकाण्डदण्डविदलितदण्डकावनचरनिशाचरपुण्डरीकः, निविडक्रीडसंवर्द्धिताशोकमुखमहीरुहनिवहपल्लवायमानकान्तिकदम्बः, मकरन्दबिन्दुतुन्दिलारविन्दगन्धवहगन्धवाहः, मर्दितचन्दनगिरिकन्दमन्दपवनकन्दलितकदलकदलमाकन्दं मञ्जरीपुञ्जरं निजनिष्यन्दमानमध्वीकपानमत्तमधुपकुलवृन्द[1]वन्द्यमानझङ्कारकलगीतिसंस्तुतः सकलमुक्तभाग्ययोग्यनिजसौभाग्यः, सकलजगत्प्रसिद्धकर्मब्रह्ममीमांसाऽऽराध्यः, गुणविशिष्टप्रसिद्धवृद्धश्रवः, प्रमुखबर्हिमुखसिद्धगणश्रद्धायमाणकर्मगणसाक्षी, अक्षीणबलपक्षिवाहारविन्दनयनमन्दिरीकृतनिजान्तरारविन्दः, सकलनिगमतनुः, भगवान् सहस्रभानुः। यतः—

[2]अभ्यङ्गैरभिसेचयन्ति सततं स्वात्मानमास्योद्भवाः
केचित् स्वर्गमनायकं च दधते तन्वन्ति केचिज्जपम्।
गायत्र्या कलयन्ति होममपरे ध्यायन्ति नारायणं
सूर्यस्थं रचयन्ति तर्पणममी देवार्षपात्रादिकम् ॥४५॥

तत्त्वोदारतटद्वयस्थजनतानित्यार्चनान्तर्गलत्
पुष्पाली युगली प्रकल्पितचलत्पार्श्वस्फुरन्मालिका।
पद्मास्योत्पललोचना रसघना चक्रस्तनी कामिनी
कावेरी लहरीकरैः सुमुखरं[3] श्रीरङ्गमालिङ्गति ॥४६॥

( आयस्तमवलोक्य )—

रङ्गस्थानं रसिकमहितं रञ्जिताशेषचित्तं
विद्वद्गोष्ठी[4]विलसितमिदं वेदघोषैर्विशिष्टम्।
सम्पल्लक्ष्मीसदनमयनं सर्वलोकस्य सम्यक्
श्रीमान् रङ्गो विलसति यतो दैवतं देवतानाम् ॥४७॥

आरभ्य रङ्गनगरीमवनीतलेऽस्मिन्
आद्वारकामपि जगाम चमू नृपस्य।
अत्यन्ततुन्दिलतराप्यखिलैर्जनौघै-
रानन्दसान्द्रहृदया रथपूर्वयुक्ताः ॥४८॥

---

१. ०कुलवन्दिवृन्द०; २. अलिगै०; ३. मुखरं; ६. ०गोष्ठि।

स्नानार्द्रसंयमितगन्धविकीर्णकेश-
पाशान्तरालविलस[1]न्मणिकुण्डलाभाः ।
क्षौमावृताश्च [2]वदनामृतभूषणाख्याः[3]
केनापि नापुकृतिना खलु दर्शनीयाः ॥४९॥

एवं सर्वत्रणाश्रिमवासिपुरुषस्त्रीजनास्तत्तद्वर्णाश्रमविधिवशात्कृतनियमास्तिष्ठन्ति । सर्वमपि प्रभुमाहात्म्यमित्यवैमि ।

( इति परिक्रम्य, पुरोऽवलोक्य )

आश्चर्यमित एवास्ते गजस्कन्धः । एनं पृच्छामि सर्वं पुरवृत्तान्तम् । ( उपसृत्य, सानन्दम् )—

अये दिशावशावल्लभ, दुर्लभमपि तपस्विनां वः दर्शनानि[4] लब्धानि[5] ।

( इति वदन् )

तं वन्दे ।

**गजस्कन्धः**—( सविनयं स्वयमपि पतितं तं प्रणम्य हस्ताभ्यां समुत्थायोरसा समाश्लिष्य, प्रहृष्य च )—

अहं केवलं वयोवृद्धः । त्वन्तु वयसा ज्ञानवृद्ध एवं परं वन्दनीयः ।

( इति मार्कण्डेय-पराशर-संवादं निरूप्य तेन सहासने उपविशति )

**सिंहस्कन्धः**—वयस्य, बहुसमयातीतेन दृष्टोऽसि । कुशलमेव हि सर्वत्र भवतः ?

**गजस्कन्धः**—( सप्रश्रयम् )—अपि सर्वज्ञे बन्धौ त्वयि मम सर्वदा कुशलमेव ।

( ततः प्रविशतो विपुलग्रीव-चित्रग्रीवौ )

**विपुलग्रीवः**—( चित्रग्रीवं प्रति )—

अहो विचित्रं नियतेश्चरित्र-
माजन्मसिद्धश्च ययोर्विरोधः ।
कुतो गतोऽयं कृपया मुरारे-
र्यतोऽभवत्सात्त्विकसङ्गलाभः ॥५०॥

---

१ ०शन्०; २. तद०; ३. ०णाढ्याः०; ४. दर्शनम्; ५. लब्धम् ।

**चित्रग्रीवः**—( सेङ्गितस्मितम् )—

अयमेव खलु भवदाशयः। सहजविरोधयोस्सिहगजयोर्न एतादृशस्नेहाभिनिवेशो दृष्ट इति तत्सत्यमेव। तद्दर्शि सर्वदृशाऽस्मद्गुरुपादेन। पश्य तपोवनमाहात्म्यम्। सकलविरोधानामपि सत्त्वानामन्यादृशस्नेहाभिनिवेशः। तथा हि—

सार्धं भद्रमदादयः करटिनः क्रीडन्ति कण्ठीरवैः
कण्डूव्याघ्रनखैरपोह्य सह तैर्गावस्सुखं शेरते।
बर्हिण्यश्च फणामणीसु फणिनां[1] पश्यन्ति रूपं निजं
भल्लूकानधिरुह्य बालशबराः खेलन्ति लीलाकुलाः॥५१॥

**विपुलग्रीवः**—अहो, त्वदुपन्यासः केन वा पुंसाऽवधार्यते। दृष्टं मया हि शेषासनसाक्षिकमेवाशेषजगद्गुरोरग्र एव शेषशेषाशनाभ्यां मुक्तविरोधमवस्थानम्। परेण नाकं परि हेमकूट-पराजिताख्यो महावकाशो ब्रह्मकोशो प्रकाशते। स एव द्वारकायां कमलाविलासनाम्ना भगवन्मन्दिरमस्माभिरनुभूयते। अलमस्मत्प्रसङ्गेन यजमानयोरन्योन्योक्तिप्रत्युक्तिचातुर्यमवधारयामः।

( इति विरम्य मौनमतिष्ठताम् )

**सिंहस्कन्ध-गजस्कन्धौ**—( सबहुमानं विपुलग्रीव-चित्रग्रीवौ विलोक्य )—अङ्गायुष्मन्तौ युवाभ्यां युवभ्यां प्रतिपदनिर्धारणव्याजेनाप्राकृतमहापुरुषमाहात्म्यमपि स्पष्टमुक्तं भवति सुखं मदनुचरौ निजम्।

( इत्युक्त्वा अन्योऽन्यं प्रकृतकार्यसंवादमकुरुताम्। )

**सिंहस्कन्धः**—( सेङ्गितस्मितम् )—

महेन्द्रदन्तावलयोर्विरोधः
स्वाभाविकः पद्मभवेन सृष्टः[2]।
न चावयोरुद्वहनाद्विरोध[3]-
स्तन्नामधेयस्य सखे कदापि॥५२॥

---

१. फनिनां; २. सृष्ठः; ३. ०रोद्धः।

दम्पत्योर्मित्रयोर्दीर्घविरहो विरोधः । सपदि पुनस्तयोर्मेलनं सुखमेव । त्वदुदीरितोऽयं दृष्टान्तस्तावदनयोर्धर्मनन्दनसक्रन्दनन्दनयोः समानो नियत्या तीर्थाटनगतेऽनवविरोधिबलरामेण नारदोदितं प्रतिज्ञापरिपालनेन, पुनरपि तयोर्घटना [1]जाताऽप्यप्राकृतश्रीकृष्णप्रसादेन, सुभद्रापाणिग्रहणसम्पादनेन च, सम्पन्नसमीहितो धनञ्जयो भवितेति । तथा हि—

अथ निबद्धवराहवराङ्कं
कनकसूत्रनिबद्धनभस्थलम् ।
अधरनेत्रपयोधरभास्वरं
वहति दण्डममुं हि नमस्करम् ॥५३॥

इति रहसि कृष्णेनोपदिष्टं प्रार्थयति । यथा—

सर्वोत्तमत्वं शरणागतानां
संरक्षकत्वं सकलेश्वरत्वम् ।
श्रीवेङ्कटेशस्य न चापरस्य
[2]तत्त्वामहं तं शरणं प्रपद्ये ॥५४॥

( इति पादौ प्रगृह्य ) पवित्रब्राह्मणपूजितः श्रीकृष्ण एव वेङ्कटेशो जात इति पुराणार्थं मनसि निधाय, स्वस्य सुभद्राघटने त्वमेव समर्थ इत्यन्यस्य तादृक् सामर्थ्यं नास्ति । तस्मात्त्वामेव शरणं प्रपद्ये, इति श्रीकृष्णं प्रति यतिरित्युक्तवानिति श्रुतम् । अपि च—

शयने श्रीरङ्गनाथः[3] चतुर्बाहौ तदुत्सवः ।
द्विभुजो[4] चम्पकेशश्च श्रीवराहोऽखिलायते ॥५५॥

**श्रीकृष्णः**—( स्वगतम् )—अयं यतिरद्यापि मामेव स्मरति । वराहस्याखिलावनत्वं भुवं प्रत्युपदेशात् । सीतेत्यारभ्य परमां गतिपर्यन्तं श्लोकेन । ततः —

उन्निद्रतिन्तिडीमूले ताम्रपर्णीनदीतटे ।
भवानेव मया दृष्टः शठजिद्रूपतां गतः ॥५६॥

श्रीधन्विनव्यनगरे सत्यभामेव राजते ।
गोदारूपेण नान्यैषा दृष्टा त्रैलोक्यसुन्दरी ॥५७॥

आश्चर्यमिदमाश्चर्यं लक्ष्मणो राघवानुजः ।
श्रीमहाभूतनगरे पतिरूपेण राजते ॥५८॥

---

१. जाताप्य०; २. तं०; ३. ०नाथः; ४. ०जे ।

भ्रमरकीटन्यायेन तत्सेवां कृतेन मया तद्रूपभूमिकावधृता सुभद्रावाप्त्यै श्रीमुष्णे नित्यपुष्करिणीरन्वर्थैव महाकोलवशजातेति हरितत्त्वप्रकाशिका कमलैव तस्य भगवतो नित्यसहचरी तत्राम्बुजवल्लीरूपेण इयमेव रुक्मिणी जाता, विशेषस्तु चतुर्भुजा सा। अनयोरयमेव भेदः।

**कृष्णः**—( तत्सर्वं श्रुत्वा ) — त्वं धन्योऽसि, एतत्कथनेन मद्बहिश्चरः प्राणो मद्दर्शनोद्धरणविचक्षणः लक्ष्मणकविः। एतेन रामरूपस्य मे चरित्रमपि स्मारितम्। एतद्रहस्योदितमपि मया ज्ञातम्। द्वारपालिकया नवमालिकया निवेदितम्—

निर्लेपमङ्गलमनोहरनित्यदेहोऽ-
प्यत्यादरेण मनुजत्वमवाप्य तेषु।
एको भवान् हरिरयं पितृमातृपूर्व-
सम्बन्धवान्विहरते जगतां शरण्यः ॥५९॥

मेदोमज्जमरीचिरत्नसुशिरानाडीपुरीषज्वल-
द्रेतोमूत्रकुशास्थिवातरशनापूर्णं त्र्यपुञ्जं वपुः।
अन्तःपूतियुतं बहिश्च सुमनस्सारोपमं दृश्यते
तत्स्थोऽहं[1] बहुपूर्वपुण्यतपसा सेवे हरिं त्वां गुरो॥६०॥

अपि च—

करणकलेवरवृद्धिर्दध्याज्यक्षीरतैलसत्त्वाद्यैः।
अन्नैरपि नानारूपैः तदभावे सत्यसैकतं[2] भूयात् ॥६१॥

भजते जगदद्य सर्वमेतत्सकलं वाऽप्यथ[3] निष्कलं च मिश्रम्।
पुरुषं विततश्रियां समेतं न परं कोऽपि मनीषिणं वरोऽपि ॥६२॥

त्वद्वाक्य तदलं घनीयमभवद्यो मामुपास्ते सतां
मन्मायां तरतीति यद्यदुपते तादृक्पुमान् कोऽत्र हि।
ब्रह्मा त्वं बृहतीश्वरोऽपि मुनयो देवाश्च संन्यासिनः
शब्दादीन्न परित्यजन्ति विषयान्त्यक्ष्यामि सोऽहं कथम्॥६३॥

अत एव ममान्तरोऽयं भावः। पश्य—

यागेषु योगकलनेषु हरौ गुरौ मे
कर्मत्रयेषु कमलाविभवे निधौ वा।
प्रीतिस्तया भवति नान्यभवेषु पित्रोः
प्रीतिर्यथैव कमलेश भवद्भगिन्याम् ॥६४॥

---

१. तत्स्थोहं; २. ०सैकथं; ३. ०वाप्यथ।

एवमपि सानुशयं निजाशयं मदनपरायणपरवशोऽपि ज्ञातभगवदाज्ञानिदेशो वदन् कमलेशशयकुशेशयं नीतिरतिशयप्रेम्णा निजकराभ्यामशिश्रयम्। ततः श्रीकृष्णोऽपि तद्वचःश्रवणातिशीतनिजश्रवणः[१] 'तथैव ते सुभद्रां घटयिष्यामि, मा शुचः' इति तं सन्तोषमपोषयत्पीयूषधाराधरैः स्ववचनवरैः।

( चित्रग्रीवः —अथैवमुक्त्वा स विरमति )

**विपुलग्रीवः—**

भ्रातुर्निदेशमवगम्य च सव्यसाची
साचीकृताननसहोदरतां घृताचीम्।
गङ्गादिसर्वसरितः स निमज्य गृह्णन्
देवाद्धि मातृवचनाच्च बभूव धन्यः ॥६५॥

मनोरथसमारूढमहीमण्डलमण्डनम्।
श्रीरङ्गद्वारकामेति [२]प्रविवेशयतु नन्दनः[३] ॥६६॥

पलाशबाणासनराजमाना-
[४]मसावनीकेन वनीं ययौ सः।
चित्राङ्गदां पाण्डचसुतां गृहीत्वा
असावनीकेन जिगाय सर्वम् ॥६७॥

**गजस्कन्धः**—( विपुलग्रीवमवलोक्य )—कुशाग्रबुद्धे, [५]त्वयाऽतिकुशलमेव प्रकृतकार्यमवर्णि, तदाकर्णि सर्वैरपि।

( नेपथ्ये )

गङ्गाद्याः सरितो विगाह्य विधिवद् दत्त्वा द्विजेभ्यो धनं
कृत्वा श्रीहरिसेवनं तदुचितं जातं धनानां वशी।
सेनां स्वां चतुरङ्गिणीं निजपुरीं प्रापय्य मार्गश्रमं
त्यक्त्वाऽऽस्ते हरिसोदरीपरिणयं वाञ्छत्यसावर्जुनः ॥६८॥

**सिंहस्कन्धः**—( श्रवणमभिनीय )—अये गजस्कन्ध, सम्प्रति धनञ्जयः सर्वेषु तीर्थेषु स्नात्वा अष्टोत्तरैकशतसङ्ख्यजगत्प्रसिद्धश्रीरङ्गपूर्वकपदेषु स्थितान् श्रीहरिबिम्बान् यथाप्रतिभानं शतसहस्रकोटिसङ्ख्यकधनैराराध्य, द्वारवतीं प्राप्त इव प्रतिभाति। तदहं तदन्तिकमेत्य तदुक्तवचनकारी तिष्ठामि। त्वमपि तन्नियुक्तकार्ये तिष्ठ।

( अथ द्वावपि यथोचितं निष्क्रान्तौ )

॥ इति विष्कम्भकः[६] ॥

---

१. श्रवणं; २. अवि०; ३. नन्दनम्; ४. असौ व०; ५. त्वयाति०।
६. विष्कम्भः।

( ततः प्रविशति सपरिवारोऽर्जुनः )

**अर्जुनः—**

आश्चर्यं नियतं च चित्रचरितं पञ्च स्मः कुन्तीसुताः
पुत्रास्ते कुरुनन्दनस्य च शतं पञ्चोत्तरा भारताः ।
एकीकृत्य च सर्वमत्र फलितं साष्टादशाक्षौहिणी-
सेना तत्तदधीश्वरा हि बहवः सर्वस्य कृष्णः प्रभुः ।।६९।।

अपि च—

व्यासो देव सरित्पतिः कलशभूस्तद्भूः कृपासिन्धुजो
धात्रीसूनुरमू च सञ्जयशुकौ गान्धारभूस्तत्पतिः ।
अन्ये मन्त्रिगणाः पुरोहितवराः श्रीहस्तिनाख्या पुरी
सावित्रीतटवर्तिनो[1] मम गुरुः श्रीवासुदेवो हरिः ।।७०।।

तस्माज्जन्मसहस्रकृत्ततपःसम्पादितं श्रीहरेः
सख्यं दास्यमनुत्तमं महदिदं[2] बन्धुत्वमव्याहतम् ।
दत्तं वित्तमनेकधा च वसुधा देवेषु तीर्थव्रते
मत्तः कोऽपि जगत्त्रये न सुकृती कुत्रापि संदृश्यते ।।७१।।

अष्टोत्तरैकशतसङ्ख्यजगत्प्रसिद्ध-
श्रीरङ्गपूर्वकपदेषु हरेश्च बिम्बान् ।
आपादचूडमनुभूय महोपकारै-
रभ्यर्च्य रत्ननिकरैरहमस्मि धन्यः ।।७२।।

तीर्थयात्राव्रत[3]स्यास्य कर्तुर्मे सफलं भवेत् ।
सुभद्रातीर्थयोगेन सर्वमेतत्सखे शृणु ।।७३।।

स्थानेयं चतुरङ्गिणी सह जनैस्संरक्षिता मामिका
राजानः करदीकृताः[4] कृतमुखाः सम्मानिताः सज्जनैः ।
गङ्गासेतुविगाहदर्शनभवैः पुण्यैरगण्यैर्युते
जाया कृष्णसहोदरी मम कृती जायेत जायेत्तदा ।।७४।।

( इति वदन् नेत्रे निमील्य, तां ध्यायन् वदति )

असकृद्दासोऽहं कुर्मिकर्मप्रगल्भ-
स्त्वदुचितपरिचारप्रक्रियासारसान्तः ।
सुतनुसुतनुभावातीतकान्ते शुभाङ्ग्या[5]-
स्तव परिजनभावं कामये कामवृत्तः ।।७५।।

---

१. ०वर्त्तिनी; २. ०तिदं; ३. ०वृत्त०; ४. करकृ०; ५. ०भाग्याः ।

अपि च —

यद्यप्यङ्गमनङ्गमङ्गलकरं तन्वङ्गि ते दृश्यते
द्वौ द्वौ तत्र मुखस्तनौ च जघनश्रोणीपरावप्यमू ।
तत्रापि द्वयमेकमेव घटते प्रीत्यै च यूना परं
तत्रैकं सकलार्चितं विजयते संन्यासिनां दैवतम् ॥७६॥

( नेत्रे निमील्य )—

निवासवृक्षस्साधूना[1]मापन्नानां परा गतिः ।
आर्त्तानामार्त्तिहन्ताऽसौ[2] कृष्ण एव गतिर्मम ॥७७॥

चतुर्णां पुरुषार्थानां दातेत्येष चतुर्भुजः ।
अतो मे कामदो[3] भूयात्सत्यभामासमन्वितः ॥७८॥

( इति परिक्रम्यासने उपविशति )

सिंहस्कन्धः —( सान्तर्हासं स्वगतम् ) —

असौ सादृश्यादवनितलवासी सुरपतिः
सुभद्रा-देवक्यामजनि खलु जाया सुरपतेः ।
तयोस्सङ्गात्सिद्धो विधिविहित एवास्ति तदपि
स्वयं चिन्तामेति द्रुहिणहृदयाद्यः कथमहो ॥७९॥

तत्सपदि घटयत्येव ते वाञ्छितं वासुदेवः । क्षणमात्रं सहस्व तदुक्तमेव हि मिथो भवदभिमतसिद्धिर्भवतीति तीर्थयात्राकथाश्रवणसमये श्रीकृष्णेनोक्तं किं तद्विस्मृतम् ।

( इति तं समाधाय, गजस्कन्धं विलोक्य — )

अये, किमर्थमकाण्डादस्मत्स्वामिना तीर्थयात्राव्रतमाचरितम् ?

**गजस्कन्धः** —( विहस्य ) शृणु, वदामि ।

आजन्मसिद्धवैराणां कुरुपाण्डुतनूभुवाम् ।
विद्याप्रसङ्गादन्योऽन्यं[4] पाण्डवास्ते विवासिताः ॥८०॥

भूयः [5]पुरन्दरसहोदरपोषितानां
पाञ्चालिकापरिणयोदितसौख्यभाजाम् ।
देवर्षिनारदवचश्श्रवणेन तेषां
तीर्थव्रताचरणमाविरभूदमोषाम् ॥८१॥

---

१. ० णामा०; २. ०न्तासौ; ३. कामतो; ४. ०न्योन्यं; ५. पुरन्तर० ।

**सिंहस्कन्धः**—नातोऽर्थोऽवगतः। स्पष्टतया वाच्यः।

**गजस्कन्धः**—( सस्मितम् )—तथैव ते[1] वदामि, श्रूयताम्—'एते पञ्च-पाण्डवा दुर्योधनेन वञ्चनया विवासिताः, नानाविध-दुःखान्यनुभूय, भूयोऽपि पुरन्दरानुजकृपया यापितसकल-दुःखाः, हिडिम्बकिम्भीरबकान्निर्जित्य चित्ररथादिविजयपूर्वं स्वयंवरस्य काञ्चनपाञ्चालिकायितपाञ्चालिकापाणि-ग्रहणं विधाय, धनधान्यसमिद्धमिन्द्रप्रस्थमधिष्ठाय सुखिनो बभूवुः।

अथ कदाचिदपरिमेयधर्मधर्मतनुः, अशोकैरिवामृतान्धः, प्रसिद्धवनोद्देश इवाशोकैरनुजैरावेष्टितः पञ्चानां भवतामियं पाञ्चाली विहारस्थली भूयादिति मातुर्वचनं चिन्तयन् पर्वक्रमागतपाञ्चालिकासहितो महितो रहस्थितः। अथैकदाऽर्जुनोऽनवसरे ब्राह्मणगोधनमपहरतो दस्यून्निहन्तुं निस्त्रिंशग्रहणार्थं युधिष्ठिरशयनसदनं गतवान्। तत्र पाञ्चालिकासहितं तमद्राक्षीत्। अतो भीतः सन् प्रणम्य बद्धाञ्जलिरेवमूचे—'पञ्चानामस्माकं पाञ्चालिकाशरीरं भोगस्यैकायतनं जातम्, एकैकस्य एकसंवत्सरमिति'। एतन्मध्ये रहसि स्थितं मिथुनं यः पश्यति स तीर्थयात्रां करोत्विति, देवर्षिभाषितं विज्ञाप्य तदनुज्ञया बहिरेत्य, दस्यून्निहत्य, गोधनं ब्राह्मणं प्रापय्य तेनानुगृहीतं[2] व्रतमारचय्य, सुभद्रापरिणयार्थं द्वारवतीमवाप। तत्र श्रीकृष्णं दृष्ट्वा एतदाज्ञया अक्षौहिणीं सेनां यज्ञ-यजननिवेशं प्रापय्य, युधिष्ठिराय एतत्पुनरागमनमपि सन्दिश्य, महाराजपार्श्वमनुगतोऽस्मि। त्वमेतावत्पर्यन्तं कुत्र स्थितोऽसि? अतिकृशोऽसि। सर्वं वद। त्त्वरयति श्रोतुं मे मनः।

**सिंहस्कन्धः**—( निःश्वस्य )—सखे, जानासि खलु मच्छीलम्।

शास्त्रव्यसनमेव मे सर्वदा शास्त्रपाठपितृव्यव्यापारेणावस्थानं सर्वसम्पदधिष्ठितोऽपि धर्मावलोकनेनानित्यत्वचिन्तया सर्वसम्पदं धिगिति वदन्, तथापि यावच्छरीरपातं कामवश एवं[3] चिन्तय देह एव, आत्मभोग एव, मोक्ष इत्येव निश्चिन्वानस्तया सहैव पुत्रमित्रशिष्यभृत्यवर्गप्रभृतिभिः सार्धं श्रीरङ्गप्रमुखश्रीविष्णुदिव्यायतनानि संसेव्य, सेतुप्रमुखतीर्थेष्ववगाह्य, श्रीपुर्यां स्थितोऽस्मि। तत्र राजापि श्रीवेङ्कटेशं संसेव्य, मया सह नगवरं प्राप्य, द्वारकामगात्। अहमपि भगवन्मायाक्रान्तमेवमचिन्तयम्—

१. तं; २. तवत०; ३. एव।

जननमरणकालाज्ञानलोलान्तरात्मा
निखिलकरणजाताप्राप्तशब्दादिभोगाः[1] ।
कुवलयनयनानां दृष्टिबाणाहतस्सन्
न किमपि भुवनेऽस्मिन् रोचयेऽनादिवस्तुः ॥८२॥

आहारनिद्राभयमैथुनानां आक्रान्तचित्तेन मया समूहैः ।
अन्य न साम्यं कृतमङ्गनानाम् ऋते पदाम्भोजनिरन्तसेवाम् ॥८३॥

अतः प्रियतमायतमाननिरसना सह मानतया शरीरसादविनोदन-प्रयत्नपरवानस्मि । पश्य—

करणकलेवरवृद्धिर्दध्याज्यक्षीरमधुरमधुवस्त्वाद्यैः ।
अन्नै[2]र्नानारसैर्गुप्तैस्तदभावे सत्यसौ कथं भूयात् ॥८४॥

भजते जगदद्य सर्वमेतत्सकलं वाष्पनिष्कलं च मिथ्या ।
पुरुषं विततश्रिया समेतं न परं कोऽपि तदन्यभावमत्र ॥८५॥

एवं वदतो मे शरीरं कृशं जातम् । नान्यदिदानीं तव दर्शनेन चेत् कृतमानेन च तद्यथारूपं जातम्, प्रियसमागमोऽपि जात एव सुखी भवामि ।

**गजस्कन्धः**—( सधैर्यम् )—विद्वन्, तथैव सुखी भूयाः । एकं शरीरमात्रं साधारणं त्वदुदीरितं वचः । विशिष्यशब्दादिविषयेषु पुष्पेषु प्रहितेषु भिन्नवपुषाममीषां यतीनां मनःप्रवृत्तिर्जायते । एवं प्रवाहरूपेण सर्वो जगद्व्यापारोऽनुभवपदमारोहति । तस्मादपरिहार्यार्थे न त्वं शोचितुमर्हसि ।

**सिंहस्कन्धः**—( सधैर्यम् )—इतः परं त्वद्वचनानुरोधेन निर्विरोधं तिष्ठामि । तिष्ठत्वेतत्प्रकृतमनुसरामः । राजापि तथादृशानाज्ञापयति, अतो राज्ञो विजयमुक्त्वा आवाभ्यामन्यतः क्षणं गन्तव्यम् । राजा चात्र[3] किमपि चिन्तयन्नस्मदनभिमुखस्तिष्ठति ।

( इति तं हस्ते गृहीत्वा, पादान्तरं गत्वा, पुरोऽवलोक्य )

सेनेयं चतुरङ्गिणी पुरमितो याता जनास्तोषिता
वस्त्रैराभरणैर्धनैरपि निजैः स्वान्स्वान्शनैरावृताः ।
भेरीमर्दलकाहलीध्वानिरसावध्वन्यहो श्रूयते
राजन्याः स्वपदानि यान्ति महिता राज्ञा समाज्ञापिताः ॥८६॥

सर्वान्विजित्य विजयी विजयः पुरास्ते दन्त्याह्वये च नगरे नगराजसौधे ।
तस्मादनन्यमनसा परमं पुमांसं ध्यायन्नसौ निजमनोरथलिप्सयास्ति ॥८७॥

---

१. भोगः; २. अन्नै०; ३. राजा चार्द्रः ।

परस्पररसोल्लाससमानरसमानसौ ।
विद्येते जयिनौ कृष्णावनुरक्तावपि स्फुटम् ॥८८॥
पार्थे पार्थे निहितहृदयः पद्मसद्मादिपद्मं
पद्माकान्तं भजदनुगुणं वेषमात्रोद्वहन्तम् ।
ध्यायं ध्यायं निजहृदि सुहृद्भावमुन्मील्य नेत्रे
कारं कारं कनकवसनं काममालिङ्ग्य तस्थौ ॥८९॥

एतावत्पर्यन्तं, "हे कृष्ण अत्र स्थित्वा मन्मुखाच्छ्रीरङ्गादिदिव्यदेश-महिमानमवधार्य क्षणेन पुनरेष्यामि, सुभद्रां घटयिष्यामीति त्वयेत्युक्त्वाद्यापि नागतोऽसि । एकोऽप्यनेकः खलु भवान्सकललोकस्थितदेवहारतरलोऽप्यतरलः । सानुचरोऽपि गिरिचरश्च अहमिव सर्वातिरिक्तोऽपि सदैकरूपः । गोपिकावाहिनिमज्जनप्रियोऽपि नमज्जनप्रियः ।

( इति वदन् पार्थमवलोकयति )

**गजस्कन्धः**—( सिंहस्कन्धमपवार्य )—सखे, उक्तं खलु पूर्वमेव सकलजगदसाधारणयापि धारणया । कृष्णार्जुनावुभावपि रहसि किमपि मन्त्रयतौ वर्तेते । तत्र कस्यापि समयो न लभ्यते । अत एव कृष्णोऽर्जुनाय सुभद्राप्राप्त्युपायं कमप्युक्त्वा क्षणं कार्यान्तरमुद्दिश्यान्यत्र गत्वा, अर्जुनसमीपमुपयातीव प्रतिभाति । अतो वयमन्यत्र क्षणं तिष्ठामः । पुनः प्रभुनिकटमागच्छामः ।

( इति निष्क्रान्तास्सर्वे[1] )

**॥ इति श्रीवेङ्कटवरदार्यविरचिते श्रीकृष्णविजयाभिधाने डिमे 'प्रथमा यवनिका' सम्पूर्णा ॥**

---

१. एतेन प्रतिमुखलक्षणमुक्तं भवति । यथा—
उक्तकार्यानुवादो हि कथ्यते विबुधोत्तमैः ।
नाटकेषु प्रतिमुखं रूपकेषु दशस्वपि ॥
इत्यलङ्कारसर्वस्वे द्रष्टव्यम् ।

# अथ द्वितीया यवनिका

( ततः प्रविशति श्रीकृष्णः )

**श्रीकृष्णः**—( सहर्षं, पुरोऽवलोक्य, सानुशयम् )—

अहो, यथापूर्वमत्रैव तिष्ठति मदागमनमाकाङ्क्ष्यमाणो विचक्षणोऽर्जुनः। अतस्तूर्णमेवास्याभ्यर्णं मनोरथं पूरयामि।

( इति परिक्रम्य )—

सुहृदिह मम वर्तते महात्मा
कृतनियमः खलु तीर्थयात्रयाऽसौ।
वरतनुवरदेहवीक्षणेच्छा-
व्यवहितमानसबद्धरीतिभावः ॥१॥

स्फुटदवलत्सरोरुहाच्छच्छद-
विहगेन्दुभकुन्दहेमकैरवाभः[1]।
सुहृदयमुपलक्ष्यतेऽद्य खिन्नो[2]
विषमशरेषु विशेषपीडचमानः ॥२॥

अतोऽहमिममभ्येत्य सुभद्रापाणिग्रहणोपायदर्शनेन सन्तोषयिष्यामि।

( इत्यर्जुननिकटमटति )

**अर्जुनः**—( पुरोऽवलोक्य )—अहो, उक्तप्रकारेण भगवान् शीघ्रमेव समागतः।

आश्चर्यमिदमाश्चर्यं अक्ष्णोर्मे फलदं महः।
अञ्जनाभमपि स्पष्टं अपशोकतमोपहम् ॥३॥

अपि च—

एकाङ्गभागेषु शताङ्गरूढः
सपादसाङ्गश्च कथं विचित्रम्।
अनङ्गकोटिद्युतिरङ्गनानां
रथाङ्गपाणिश्श्रियमातनोतु[3] ॥४॥

---

१. कैरवभावः; २. कृष्णो; ३. ०जनोतु।

( इत्युत्थायोपसृत्य )—

गोपीसहस्रपरिरम्भणधन्यधन्यं
गोपालबालमवतंसितबर्हिबर्हम् ।
गोवर्धनो[1]द्धरणदक्षमुदारभावं
गोविन्दमिन्दुवदनं शरणं प्रपद्ये ॥५॥
आलोलकुन्तलमनङ्कुशकर्णभूषं
अत्युच्चनासमलिकोल्लसदूर्ध्वपुण्ड्रम् ।
अम्भोरुहाक्षकरपादमुखाधरोष्ठं
आलोकयामि हरिमञ्जनशैलनाथम् ॥६॥

( इति वदन्, प्रणम्योत्थाय, बद्धाञ्जलिरतिष्ठत् )

**श्रीकृष्णः**—( सदयम्, सपदि रथादवतीर्य, सस्मितम् )—अचिरादवाप्तमनोरथो भूयाः। पञ्चषदिनात्पूर्वमेव त्वदागमनं श्रुत्वा बलरामादयस्त्वां द्रष्टुमागच्छन्ति। तत्पूर्वमेव तव सुभद्रापाणिग्रहणोपायं वदामि—

त्रिदण्डकाषायशिखोपवीतैः
सितोर्ध्वपुण्ड्रैस्सहितो द्विषोकैः ।
कदा सुभद्रां घटयन्नुरस्यां
सुखं लभेयेति विचिन्तयध्वम् ॥७॥
अथ निबद्धवराहवराङ्ककं
कनकसूत्रनिबद्धनभस्थलम् ।
अधरनेत्रपयोधरभास्वरं
वहति दण्डममुं हि चमत्करम् ॥८॥
लोके समस्तजनमस्तकसेव्यमान-
मस्तार्तिनिस्तुलमुदस्तमितान्यभावम् ।
स्वस्त्यस्तु ते कनकमेयशरीरकान्ति-
कन्यात्मकं किमपि रत्नमयत्नतेजः ॥९॥

**अर्जुनः**—( सानुशयम् )—

संन्यासयोगनिष्ठस्तु कथं भूयो गृही भवेत् ।
प्रायश्चित्ताद्यनर्हत्वात्सद्यो भवति नारकी ॥१०॥

**श्रीकृष्णः**—( सस्नेहम् )—

न वेषमात्रेण यतिः, न तु वेदान्तकीर्तनात् ।

---

१. वर्दनो० ।

अपि तु—

मनसो निर्विकल्पत्वे संन्यासो विहितो भवेत् ।
सर्वत्रेश्वरविज्ञानं मनसो निर्विकल्पकः ॥११॥
तावत्कर्माणि कुर्वीत निष्कामो मयि भक्तिमान् ।
मां पश्यति सर्वत्र मनसा संन्यसेत्ततः ॥१२॥
वाचा ब्रह्म वदन्मूढो मनसा सविकल्पकः ।
यः कुर्यात्कर्मसंन्यासं सोऽन्धवन्नरके पतेत् ॥१३॥
मां च पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तद्ब्रह्मज्ञानमित्युक्तं विरक्तो निर्गमेद् गृहात् ॥१४॥
संन्यासयोगमात्रेण कर्मत्यागी पतेदधः ।
यावत्कालं तु गायत्री तावत्कालं न पात्यते ॥१५॥
विरक्तो योऽवसिद्धान्तो क्षान्तो मय्यपि भक्तिमान् ।
संन्यस्य सर्वकर्माणि निराशो यतिमाश्रयेत् ॥१६॥
नटवद्यतिवेषोऽपि द्वापरान्ते न दुष्यति ।
पतेत्कलौ तु संन्यासिवेषमात्रेण किं पुनः ॥१७॥
अतस्सद्यस्त्वया कार्यो यतिवेषसमाश्रयः ।
व्रज द्वारवतीं प्राप्ते मया सर्वञ्च साध्यते ॥१८॥
अथार्जुनोऽपि दृष्टात्मा विरक्त इव भावयन् ।
त्रिदण्डो द्वारकामेत्य गुहां शैले समाश्रयत्[1] ॥१९॥

**श्रीकृष्णः**—( [2]सनिर्विचिकित्सम् )—मदुक्तोपाय एव समाश्रितं त्वया । अतः सुभद्रा तवैव भार्या भवति । यतिवेषोऽप्यशेषविशेषमनीषा भूषायते । पश्य—

कलाविलासी[3] कमलायताक्षी
कठोरवक्षोजकुठारदक्षः ।
सौम्यस्त्रिदण्डीव भवान्विभाति
संरक्षकः सर्वसुहृज्जनानाम् ॥२०॥

विधिरपि बलवानसौ महात्मा
घटयति तामपि मे सोदरीं ते ।
प्रतिनृपतिबलानि सादयित्वा
निरवधिकां वितनोति सम्पदं ते ॥२१॥

---

१. ०श्रयम्; २. निर्विचि०; ३. ०निवासी ।

( नेपथ्ये )

अग्रे यान्तु तुरङ्गिणस्सरथय:[1] पादातयो दन्तिन-
स्तत्पश्चादनुयान्तु हेमशिविका दान्ताश्चतुर्युक्तृता: ।
राजान: प्रभव: स्त्रिय: परिजना: पौराश्च मुख्या इमे
श्रीमद्यादववंशमौक्तिकमणेराज्ञानुगास्सानुगा: ॥२२॥

श्रीकृष्णः —( श्रवणमभिनीय )—कृतवनदेवतासमाराधना बलरामादय: सपरिवारा अनेन पथा समायान्ति इव प्रतिभान्ति । तदहं तदागमनात्पूर्वमेव तत्र गत्वा तैस्सह किमप्यजानन्निव तव निकटं पुनरेष्यामि तदा सिद्धान्तस्सम्भवति ।

( इति तं समाधाय निष्क्रान्तः )

अर्जुनः —

यतिरपि मतिहीनो यत्नकृतपत्नियोगे
पदमनुपदमेवं भाषतेऽशेषतोक्त्या ।
सरसिजनयनाया: सर्वगात्रं कदा मे
रहसि भवति पात्रं कामतन्त्रस्य कान्तम् ॥२३॥

श्रावं श्रावं गुणगणमहं सज्जनन्या वराङ्ग्या
ध्यायं ध्यायं तदनुसकलानप्रतीकान्प्रतीकान् ।
कारं कारं कथमपि दृढालिङ्गनं मानपूर्वं
पायं पायं तदधरसुधां योगिनामस्मि राजा ॥२४॥

अनुजनमनुरूपधर्मजातं
सुखमिह सङ्क्रमते क्रमेण जन्मी ।
विधिबलसहितोऽप्युपैति कश्चित्
कनक[2]तडित्समकान्तियुक्तकान्ताम् ॥२५॥

दशशतकोटिपुण्यभाजां
अवनितले वसतां[3] सतां समाजे ।
यतिरपि भविता कदापि कश्चित्
सुकृतितमः सुदृशां कटाक्षपात्रम् ॥२६॥

प्रातः स्नानजपादिकर्मनिरतः पत्नीसुताप्तानुगः
संसारोचितवास्तुमार्गगदशाचिन्ताप्तचित्तस्सदा ।
यस्तुर्याश्रममाश्रितो निरुपधिः स्वैरं चरन्स्वैरिणी-
पादाम्भोजयुगो निबद्धहृदयस्सोऽयं हि धन्यो यतिः॥२७॥

---

१. सारथय:; २. तटि०; ३. ०तलेव सतां० ।

मृष्टचा सङ्गममाचरन्ति कतिचित्स्त्रीणां वराङ्गे परे
दृष्टचा कामपि कामिनीं स्मरवशादाराद्भ्रुवा मोहिता।
ध्यायं ध्यायममूर्नि मीलितदृशः सर्वात्मना नेक्ष्यते
को वा जेतुमनङ्गमङ्गभविता विष्णुर्विधिश्शङ्करः ॥२८॥

सोऽहं धन्यतमो यतिः करुणया कृष्णेन सङ्कल्पितः[1]
पात्रं नेत्रयुगस्य तत्सहभुवो मत्तुल्ययोगी च कः।
मान्यामान्यवतो जनस्य मधुरालापा मनोहारिणी
सर्वांशैरतिशायिनी मधुरिपोर्भ्रात्री भवेन्मे प्रिया ॥२९॥

दृष्ट्वा मानवमोहिनीं भगवतो मायां महायामिनीं
नानारूपमहातपाः[2] कृतिचणा योगीश्वराणां गणाः।
रेतोद्रेकदृढोन्नमद्धृदयभूरण्ड[3]द्रवद्रेतसो
जाताः किं पुरुषाः स्त्रियोऽपि च कथं जेष्यन्ति कामादिकान् ॥३०॥

सर्वेषां रतिनाथविभ्रमजुषां योषां विना का गति-
र्भूषां भूवलयस्य फुल्लकमलावासापतेः सोदरीम्।
चण्डीशारिशशाङ्क[4]मन्दपवनश्रीमाधवादीन् कदा
जेष्याम्येत्य जनार्दनस्य कृपया दैवं प्रमाणं परम् ॥३१॥

मूर्द्धानं पत्युरारोहेदेषा श्रुतिरभूत्तदा।
यदा सा शिरसा धार्या सुभद्राऽन्वर्थनामका ॥३२॥

कण्ठे बाहुलतां मुखे निजमुखं गाढं कुचौ वक्षसि
श्रोणीमूरुयुगेऽधरदलं निक्षिप्य निक्षिप्य च।
प्रेम्णा साधुतया मुदा लघुबलादालिङ्ग्य यः चुम्ब्यते
सोऽयं धन्यतमो यतिस्त्रिजगतामेकाधिपानां गुरुः ॥३३॥

पीनपयोधरनेत्रा कण्ठतटीबद्धहेमसूत्रा च।
कम्बुसहोदरकण्ठी वंशीयष्टिर्विभाति तन्वङ्गी ॥३४॥

इयं सुवदना श्यामा कुण्डिका चण्डिकेव सा।
यतेः पार्श्वे करस्यैव भाति पीनपयोधरा ॥३५॥

( इति वदन् परितोऽवलोक्य सहर्षं स्वगतम् )—

एके[5]नालावलम्बिफलद्वयवद् हंसडिम्बकौ वर्तेते। एताभ्यां क्षणं

---

१. ०ल्पिताः; २. तपः; ३. ०दण्ड०; ४. ०शाङ्ग०; ५. एक०।

स्थित्वा, कालयापनं करोमि। तन्मध्ये देवः समायात्येव। तदा मे मनोरथः सफलो भविष्यति।

( प्रकाशम् )—भो वयस्य-पुत्रौ, समीपमागच्छतम्। किं युवामत्र स्वेच्छया समागतौ, उत्तमश्लोकवार्तया वा ?

**हंसडिम्बकौ**—( सप्रश्रयं साष्टाङ्गं प्रणम्योत्थाय बद्धाञ्जलिमवदताम् )—'स्वामिन्नावामात्मनाऽऽगतौ। किन्तु देवेन प्रेषितौ। अपूर्वोऽयं यतिर्गुहायामास्ते समस्ते डिमे। तं निकटमटतं तत्र व्यापारेण कालं नयतम्। अहमपि सबलरामादिस्तत्रैष्यामीति। तं द्रष्टुं दैवमेव घटति।' इत्युक्त्वा आवां प्रेषितौ।

**अर्जुनः**—( सधैर्यस्मितम् )—अङ्गीकृतं सुकृतिनः पालयन्ति। युवां समस्तविद्यापारङ्गताविति जाने। किमहं परीक्षकः। युष्माकं विद्याविलासः प्रसिद्ध एव। भवत्पितृरूपावेव भवन्तौ।

**हंसडिम्बकौ**—स्वामिन्! तथा न नियमः। कार्यकारणयोर्भेदोऽस्ति। पश्यतु[1] भवान्—

अणुरपि सकलप्रकाशहेतुः
शुचिरयमन्वहमेधते समन्तात्।
तदुदितमपि धूमजातमेतत्
सकलविलोचनबाष्पदं बभूव ॥३६॥

किञ्च—

अब्जोऽप्यत्यन्तह्रस्वोऽयमेधानग्निर्दहेत् क्षणात्।
सागरोऽपि न तद्धेतुर्दहत्येकं तृणं क्वचित् ॥३७॥

कार्यं निदानाद्धि[2] गुणानधीते
न कारणात्स्वाब्धिभिदे क्रमाच्च।
जलेषु शैत्यं न च तत्स्थलेषु
तिलेषु तैलं न च सैकतेषु ॥३८॥

एतत्तु कादाचित्कं न तु सार्वत्रिकमिति मन्तव्यम्।

**राजा अर्जुनः**—( सशिरःकम्पम् )—सत्यम्, किमसुलभमत्रभवतां सर्वशास्त्रार्थतत्त्वज्ञानां व्यवहर्त्तुम्। क्वचित्क्वचित् कारणयोः समानरूपत्वम्। क्वचित् कार्यकारणयोरसमानरूपत्वम्।

---

१. पश्य; २. निधानाद्धि०।

यथा मृद्घटयोस्तन्तुपटयोः समानरूपत्वम् । वंशाङ्कुरकदल्योर्गोमयगोमणयोरण्डवृश्चिकयोरसमानरूपत्वम् । जगन्नारायणोद्भवमित्यादौ कारणगतसत्यत्वादीनां जगत्यभावादीषत्साम्योपपादनादेवाखिलार्थसिद्धिरिति सर्वविद्वत्कविसम्मत इत्यवगन्तव्यम् । ततस्ततः ?

**हंसकः**—शास्त्रवादस्य नानारूपत्वादतिगहनम्, तिष्ठत्वेतत् । श्रूयतामिदम्—

**प्रथमश्लोकः**—

किं तेजोऽधिकमस्य किं स्थितिकरं को रक्षतीमं जनं
किं चाशास्यमशेषतः शुचिकरं किं चास्य रस्यं[1] च किम् ।
किं वा सर्वरसज्ञमाशुभरणं[2] किं वा बहूनां द्वयं
सम्प्रार्थ्यं कथयन्त्यमी[3] प्रतिवचः प्रश्नस्य ये ज्ञानिनः ॥३९॥

**द्वितीयश्लोकः**—

को धन्यो धनवांश्च कः प्रियतमः को वा सुखं किं कुतः
किं श्लाघ्यं कमनीयतारकगुणः को वा च कस्तुष्टिमान् ।
गेहं किं कतमो मतश्च पुरुषः को वा जनो दुर्जनः
प्रश्नस्य प्रतिभाषणं वदति यः सोऽयं विपश्चित्तमः ॥४०॥

**तृतीयश्लोकः**—

किं वा भोगनिदानमस्य[4] जगतः किं कारणं कः प्रियः
का वन्द्या सकलैर्जनैः कुलवधूः सर्वोन्नतो कः पुमान् ।
को देशो वसतेर्जनस्य हितकृत् किं स्याज्जनानन्दनं
प्रश्नस्य प्रतिभाषणं वदति यः सोऽयं विपश्चित्तमः ॥४१॥

**चतुर्थश्लोकः**—

किं सर्वैरपि काङ्क्षणीयमनिशं को भोग्यभाग्या सह
का ब्राह्मण्यविधायिनी गुणनिधिः को वा दुरात्मा जनः[5] ।
को वा याचितवृत्तिरत्र कुमतिः को वा जनेष्यश्च कः
प्रश्नस्य प्रतिभाषणं वदति यस्सोऽयं विपश्चित्तमः ॥४२॥

**यतिरर्जुनः**—किं तेजोऽधिकमस्य व्याख्यातम्—

चक्षुरन्नं पिता श्रेयो नीरं लवणमित्यपि ।
रसनेन्द्रियं च वस्त्रे द्वे प्रश्नस्यास्योत्तरं वदेत् ॥४३॥

---

१. परस्य; २. ०माभर०; ३. ०न्त्व०; ४. ०दानस्य; ५. च कः ।

**द्वितीयश्लोकस्यार्थः—**

अनुष्ठाता विद्वान् परहितपरः स्त्रीसहचरः
तथा दानं यज्ञः[1] परधनानिराशश्च सततम् ।
गृहिणीविशिष्टो योऽपक्षपाती
सर्वजनदूषकोऽस्य प्रश्नस्यैतत्प्रतिवचनं हि नियतम् ॥४४॥

शृणु ध्यानेन हंस !

**तृतीयश्लोकस्यार्थः—**

शरीरं प्रकृतिर्दक्षो लक्ष्मीश्चारित्रभूषणा ।
परमाचारराजन्वान्तौर्यत्रिकमिहोच्यताम् ॥४५॥

प्रतिवचनत्वेनेत्यर्थः ।

**तुरीयश्लोकस्यार्थः—**

काञ्चनं श्रीकटाक्षश्च गायत्रीं यः प्रपन्नवत्[2] ।
उद्वेजनीयः स हि चालकश्च मूर्खश्च यः शीलसमन्वितश्च ॥४६॥

**हंसडिम्बकौ—**

का श्रेष्ठा सरितां स्थलेष्विह महत्यास्ते च का वा स्थली
रम्या सर्वजनस्य कः क्षमिवरो नित्यं सुखी को जनः ।
कस्स्यात्सर्वभयङ्करः शुभकरः को वा जनानां सतां
प्रश्नस्योत्तरदायको भवति यस्सोऽयं विपश्चित्तमः ॥४७॥

किं वेदेष्वपि चोत्तमं प्रियतमं विष्णोश्चरित्रेषु किं
रत्नेष्विष्टफलप्रदो हि च नृणां कस्साहसी पक्षिषु ।
अर्थानामपि रक्षणं किमखिलक्लेशापहं किं स्वयं
प्रश्नस्योत्तरदो जनो भवति यस्सोऽयं विपश्चित्तमः ॥४८॥

**यतिः ( अर्जुनः )**—का श्रेष्ठा सरितामित्यस्यार्थः—

गङ्गा यथेच्छविहारज्ञो ब्रह्मज्ञानी अनृणामप्रेष्यः ।
यदृच्छालाभसन्तुष्टः भुजङ्गो मौनीति वक्तव्यम् ॥४९॥

किं वेदेष्वपीत्यस्यार्थः—

पुरुषसूक्तं श्रीमद्रामायणं च चिन्तामणिः ।
कुलिङ्गशकुनिस्त्यागश्च पुत्रश्चेति वदाम्यहम् ॥५०॥

( इति हंसकडिम्बकौ मौनमास्ताम् )

---

१. दानं न यज्ञे; २. गायत्रीं यः प्रपन्नः ।

**यतिः ( अर्जुनः )**—( सहर्षम् ) युवाभ्यां कथितं युक्तमेव। घटपुलाकन्यायेन युवयोः सर्वज्ञता ज्ञाता; परन्तु दैवबलादेव विद्यासम्पदां प्राप्तिरिति नीतिवादः। पश्य—

ऐश्वर्यमक्षरगतिं विपुलं च शीलं
यः प्राप्नुयात्स खलु दैवबलेन युक्तः।
अन्यस्य तन्निकटवासमुपेयुषः तत्[1]
यातीव किं न हृदयं[2] न भवेद्विषादः ।।५१।।

किञ्च—

अग्रे पश्चादुपरि परितः पार्श्वयोः कः समन्ताद्
ग्रामे गेहे जनपदवरे पट्टने मार्गमध्ये।
सिन्धोस्तीरे विपिनसरसिंहह्लादिभिः[3] सङ्कटादौ
युद्धेऽनर्थे स्थितमपि जनं साध्ववत्येव दैवम् ।।५२।।

**हंसकः**—( डिम्बकमपवार्य )—अये डिम्बक, कोऽयमिति यतेराशयः। कार्यान्तरमुद्दिश्य कोऽपि जनो यतिवेषेण तिष्ठतीव प्रतिभाति। तदन्तरङ्गज्ञः सर्वज्ञः श्रीकृष्ण एव जानाति। मत्प्रेषणसमये उपांशुः किञ्चिदुक्तं भगवता। तद्गोप्यमस्य निकटे। स्पष्टमग्रे भविष्यति। आवां पुनरत्र क्षणं स्थित्वा यतिना सम्मानितावन्यत्र गच्छावः। श्लोकभावने विचारयावः। ( प्रकाशम् )—

भो यते, महानुभावो भवान्। भवदुदीरितस्यार्थो भवतैव ज्ञायते। कूपमण्डूकन्यायेनावयोर्ज्ञानम्—

शुकोक्तिममृतत्वेन लिपित्वेन घुणक्षितिम्।
श्रोत्राभ्यामपि नेत्राभ्यां महान्तो लालयन्ति हि ।।५३।।

कलत्रमित्र[4]सद्विद्याधनधान्यसुहृत्सखैः।
जनैस्सदा समेतोऽपि त्वादृशः किं भवेज्जनः ।।५४।।

( इति वदन्तौ तिष्ठतः )

**यतिः ( अर्जुनः )**—( सस्मितं स्वगतम् )—इमावतिचतुरौ श्रीकृष्णेन किञ्चित् प्रकृतकार्यं ज्ञापिताविव प्रेषितौ प्रतिभाति। तदपि मदतिशयमुद्दिश्यैव भवतु सुखायनः। ( प्रकाशम् )—

---

१. तदा; २. हृदयं तेन; ३. ०ह्लादिनी; ४. ०पुत्र०।

अङ्ग, भवन्तौ सर्वज्ञावेव; परन्तु सकलजनकृताञ्जलिपतञ्जलिसर्वज्ञचरणाक्षजैमिनिसकलकल्याणगुणनिधिश्रीवेदव्यासादिमुनिजनकृतशास्त्रप्रपञ्चनिर्वचनविरिञ्चोऽप्यहं युष्मत्मतरीतिं न जानामि । तामद्य विशदयतं युवाम् ।

**हंसकः** —( डिम्बकं प्रति वदति )—अये डिम्बक, अयमन्यादृग्यतिर्योऽत्यायतिभावः । कस्यचिद्देशस्य सम्राडिति भावो नयति न तु परिव्राडिति । कुतः—रथाङ्गशङ्खासिगदाधनुर्वरपद्मकराध्वरेखाविराजमानत्वात्, ध्वजकलशादिमहाराजचिह्नसमन्वितत्वाच्च ।

यतः —

विद्या गृहीता विविधोत्तमेभ्यो
दानेन मानेन समाश्रयेण ।
तास्तास्समस्ताश्च यथा गृहीता-
स्तथैव शिष्येष्वमुनोपदिष्टा ॥५५॥

भवतु—

वेदैर्दान्तैश्चतुर्भिस्तदनुगुणगणै[1]र्पदपदैश्शास्त्रवादै-
र्दानैः कर्णावमानैः श्रुतियतिसहजैस्सूक्तिसारैरुदारैः ।
दृप्यद्दोर्दण्डशुण्डप्रतिहतकठिनक्रूरवादादिरङ्गः
श्रीमान् रामानुजार्यं प्रति हरिसदनं राजते राजहस्ती ॥५६॥

अग्रे पश्यामः —

फेनावरुद्धोऽपि मणिः स्वकान्त्या भासतेऽनिशम् ।
बाहुजो वा द्विजो वाऽयं यतिः केनापि हेतुना ॥५७॥

( प्रकाशम् )—भो यते स्वामिन्, इदमस्मन्मतमवधार्यताम् ।

रहस्यतत्त्वत्रयवादिनो वयं
परत्वमेवाभिलषामहे हरेः ।
विशिष्टमद्वैतमिदं यते[2] भवान्
स एव रामानुजयोगिराडिति ॥५८॥

एते रामानुजीयाः श्रुतिमतिसुगताः[3] पञ्चसंस्कारयुक्ता
भक्ताः श्रीवैष्णवानां पररिपुरुपजिद्भाष्यकृत्सूक्तिसाराः ।
कुर्वन्तो मन्वदः श्रीहरिभजनमथो[4] भुक्तशेषं च मुख्यं
पैत्रेष्वर्थेषु पञ्चस्वपि किल समयेष्वादरं पाञ्चरात्रे ॥५९॥

---

१. ०गुणै०; २. यतो; ३. श्रुतिमतिगताः; ४. ०मधो ।

सौम्ययतिः ( अर्जुनः )—( साञ्जलिबन्धम्, शिरसा प्रणम्य )—भो दोषज्ञौ, भवन्तौ सर्वज्ञावेव। श्रीरामानुजरूपनिरूपणेन धन्यो भवामि। तद्दिव्यशुभाश्रयं निरूप्यताम्।

हंसकडिम्बकौ—( सविनयाञ्जलिबन्धम् )—

उपवीतशिखात्रिदण्डयुक्तः
सितमृत्स्नाकलिताखिलोर्ध्वपुण्ड्रः।
वरपल्लवताम्रवस्त्रधारी
सुतरां श्रीरामानुजयोगिराड्विभाति ॥६०॥

सौम्ययतिः अर्जुनः—भो विद्वांसौ, त्रिदण्डधारणे किं प्रमाणम्?

हंसकडिम्बकौ—श्रीकृष्ण एव प्रमाणम्। त्वमपि। किञ्च—

काणादशाक्यपाषण्डैः त्रयीधर्मो विलोपितः।
त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी ॥६१॥

सीतापहारी च दशाननोऽपि
त्रिदण्डकाषायशिखोपवीतिः।
तारापहारी गुरुरत्र मानं
किं ते न कर्णं सुगतं यतिज्ञः ॥६२॥

सौम्ययतिः (अर्जुनः)—अहो किमनेन धर्मव्यतिकरेऽपि कदाचिदुपद्रववशात्। 'वेषान्तरगृहीतेऽपि संन्यासी प्रायश्चित्ती न भवति।इत्युक्तं भवति। इदं तिष्ठतु। युवां बहुधा परिष्करणीयौ।

( इति श्रीकृष्णं ध्यायति )

कृष्णोऽपि कृष्णहृदयं ज्ञात्वा द्रविणसंहतिः।
ववर्ष पुरतस्तस्य स तास्ताभ्यां ददौ मुदा ॥६३॥

( तौ तामादाय साश्चर्यं यतिनाऽनुज्ञातौ निष्क्रान्तौ )।

अर्जुनः (यतिः)—( साकूतस्मितम् )—

नागपर्यङ्कशयनं हि नलिनायतलोचनम्।
तावद् ध्यायामि तं देवं यावदुद्घाट्यते मया ॥६४॥

( इति वदन् तिष्ठति )

( ततः प्रविशति श्रीकृष्णः )

**श्रीकृष्णः**—( सस्मितं, दारुकमीक्ष्य )—रे दारुक, सुलभेऽपि कार्ये महान् प्रयत्नः क्रियते। महाकार्येऽपि स्वल्पप्रयत्नः क्रियते। एतदुभयं विधिविहितमेवेति विज्ञायते, न तु पुरुषकृतमिति। पश्य—

आश्चर्यं प्रकृतिर्जनस्य बहुधा पक्षानमन्वीक्षते
तत्राप्येकगुणाः सरोजवदनापेक्षा सुवर्णैषिणी।
अन्या सर्वरसायनीति च पराप्येवं तयोरुत्तमा
काऽप्येषा ललना परा विजयते सर्वोत्तमा सम्प्रति ॥६५॥

रेतस्सिञ्चन्सृजति युवतिष्वात्मनानङ्गगेहे
कामं कामं भजति तरसा सारथिस्सारथित्वम्।
प्राणी वाणी प्रतिकृतिरयं स्वीयदेहात्प्रजो यो
लोकास्सर्वे प्रमुदितहृदस्स्वाङ्गजाः स्त्रीपुमांसः ॥६६॥

**दारुकः**—( सप्रश्रयं )—स्वामिन्, तादृशधीरपि श्रीःप्रभावमेव प्रकाशयति। तदर्थमेव यतेरयमारम्भः स्वामिना निवेदितः। (पुरोऽवलोक्य)—त्वदुदीरितप्रकारेण प्रभासतीराद् वनदेवीं समाराध्य सर्वेऽपि बलरामादयोऽन्नादिभिरतितृप्तास्तस्करीमस्करीसमीपमापुः। अस्माभिरपि नियमानुष्ठानमाचरितम्।

( ततः प्रविशन्ति बलरामादयः )

**बलरामः**—(सोत्साहम्)—अहो, अघटितघटनाचातुरी परिणता श्रीकृष्णस्य। यतः।

अस्मिन्निशीथसमये निखिलान्नियुज्य
कार्यान्तरे स्वयमसौ पदवीं प्रपन्नः।
अस्याः पुरः किमपि चेतसि चिन्तया नः
सम्फुल्लनेत्रवदनस्स च बन्धुरास्ते ॥६७॥

( इति वदन् श्रीकृष्णमुपेत्य, अग्रे विलोक्य )

पश्य कृष्ण, महानेष योगी भोगीव दृश्यते।
यद्देहकान्त्या विशदा दरी भातीव सुन्दरी ॥६८॥

अपि च—

त्रिदण्डकाषायशिखोपवीतैः
पुण्ड्रैर्द्विषट्कैस्सितदीर्घरूपैः ।
कमण्डलूपानहशिक्यपीठै-
रमण्डितैरस्य मणिप्रकाण्डैः ॥६९॥

रामामृताक्षरमलं स्फुरिताधरोष्ठे
रामाकृतिप्रतिकृतौ बहुधाऽनुरागी ।
भोगी च पुण्यजनपूर्वसुराग्रभागी
योगी च सर्वसुदृशामयनाविभाति ॥७०॥

श्रीकृष्णः—( सोपहासम् ) अहो पण्डिताः, रामेति श्लोकस्यायमर्थः । शृण्वन्तु सर्वेऽपि अर्थान्तरपात्रतामयमयते यतिरिति ।

सर्वेऽपि—यद्युवयोरभिमतं तत्समीचीनमेव सकलजनशिरःकम्पि च ।

बलरामः—( सविनयकोपम् ) भो वत्स, कृष्ण अलमलं ममोपहसितेन । मदुदीरितं पदं तव हासपदं जातम् । तिष्ठत्वेतत् । त्वं वर्णयैनं सर्वश्रुतिसुखायनं भवतु ।

श्रीकृष्णः—

कलानिवासी कमलायताक्षी[1]
कठोरवक्षोजविमर्दनक्षमः[2] ।
सौम्यस्त्रिदण्डीव भवत्यदीनः
संरक्षकस्सर्वसुहृद्वधूनाम् ॥७१॥

सर्वे—( प्रकटं, विहस्य ) अये हलिन्, बलीयान् तव भ्राता कृष्णः सर्वज्ञः सर्वशक्तिमानिमं श्लोकं परमपुरुषार्थप्रदमिति निर्धारयितुं शक्तोऽस्माकमस्य चाजगजान्तरम् । अतस्तूष्णीं वर्त्तमाना यत्याश्रमसमीपमागताः । तस्माद्यानावरोहणं कुर्मः ।

( इति यानादवरुह्य यत्याश्रमप्रवेशं नाटयन्तः )

सर्वे—

अनुग्रहाय लोकानामवतीर्णाय[3] यते नमः ।
शिखोपवीतकाषाय दण्डिने दत्तयोगिने ॥७२॥

---

१. ०दाक्षी; २. ०क्षमम्; ३. ०तीर्णो ।

( इति प्रणम्योत्थाय बद्धाञ्जलयस्तिष्ठन्ति )

**बलरामः**—(पितरौ विलोक्य) हे पितरौ, अयं सौम्ययतिरस्मत्गृहप्रमदावनं प्रविशतु, तिष्ठतु च। गुहायाः पुरश्च भिक्षाग्रहणायातायातेन परिश्रान्तः। बहुधा क्लाम्यति च। पितरौ, तथैव क्रियताम्।

**श्रीकृष्णः**—( सोपहासम् ) आर्य, न विश्वसनीयः सर्वथा यतिः। अयं विप्रलम्भको यतिरिव। तत्कथां जानासि खलु। अनेन सर्वे वयं विप्रलब्धा भविष्यामः। अतोऽस्मद्गृहे वस्तुमयोग्यः। मद्वाक्यमङ्गीकरणीयमन्यथा महानपराधो भवति भवतामिति सर्वान् बोधयति।

**बलरामः**—( साभिमानम् ) अयं वत्सो लीलापरवशः किमपि किमपि वदति। तत्सर्वमुपलालनीयमेव। ( सान्तर्हासम् )—अथ झटिति चलपुटे चक्षुषी विस्तृणानः श्रीमन्नारायणस्मरणं कुर्वन्सर्वानवलोक्य स्मितमधुराधरमतिष्ठत् ) परन्त्वयं भास्कर इव कतमस्तस्करो मस्करिवरोऽस्मद्भवनोद्यानं प्रापणीय एव। अत्र सर्वोपचारैरर्चनीय एव।

( सर्वेऽपि तथैवेत्यूचुः। यतिं विलोकयन्ति च )

**यतिः**—युष्माकं यथा मनीषा, तथा क्रियन्तामित्यूचे।

**बलरामः**—( सामोदं कृष्णादीन् प्रसादयन् यतिं कनकशिविकामारोप्य, स्वभवनोद्यानं प्रापयामास। तत्र स्वभगिनीं सुभद्रां तच्छ्रुश्रूषणार्थं नियोजयामास )।

( अथ सर्वेऽपि यथायोग्यं निष्क्रान्ताः। )

**॥ इति श्रीकृष्णविजयाभिधाने डिमे द्वितीया यवनिका सम्पूर्णा ॥**

॥ हरिः ॐ ॥



## अथ तृतीया यवनिका

**यतिः**—( विभाव्य )

( ततः प्रविशति प्रमदाभिलाषी प्रमदावनं सुयतिः )

यतिरतिरतिरामात्कामवश्यः कृशात्मा
सुतनुसुतनुयोगं वाञ्छति प्रौढयोगम् ।
तदनु तदनुरूपं तापमुत्सृष्टमापं
हिमकरदृषदोघैर्योऽतितीरं विवेश ।।१।।

दण्डादीन्विनिवीय[1] केवलशिखायज्ञोपवीतोज्ज्वलो
धृत्वाऽसौ कमनीयकं सितमृदा क्लृप्तोर्ध्वपुण्ड्रैर्युतः ।
श्रीचूर्णस्सरसीं विगाह्य च शुचिर्जप्त्वा त्रिपादं मनुं
ध्यायन् श्रीहरिसोदरीं[2] वरतनुं सम्राड् यतीनां स्थितः ।।२।।

तत्रान्तरे सरससारसचारुनेत्रा
सौन्दर्यसागरसमुद्भवसारलक्ष्मो ।
साकं सखीभिरनुरूपविभूषणाढ्या
पत्युस्सकाशमभजद्यतिनां सुभद्रा ।।३।।

( अनेन सावमर्शचूलिका उक्ता भवति ।

यथा—

प्रतिपाद्यकथांशा या प्रधानेन प्रकाश्यते ।
पात्रेण सावमर्शेति चूलिका सोदिता बुधैः ।।४।।

इति लक्षणात् । )

( ततः प्रविशति यथानिर्दिष्टा सुभद्रा )

**सुभद्रा**—अहो, सहिओ, जहिणिद्दिठं अह्मंगजेण वलरामेण तव्वकातव्वं, भद्देति मां आकारिअ ।

( छाया ) [ अयि सख्यः यथानिर्दिष्टं ममाग्रजेन बलरामेण 'तथा कर्त्तव्यं भद्रेति' मामाकार्यः । ]

'सह सहिओ अह्मप्पमदाओ अनंप्पविसिओ अअकसाओ जइसरपादो

---

१. ०निविनीय; २. ०दरी० ।

सेवं सेवं कुरुसु। एव्वं एव अम्मजणणी तादेहिक किस्सणेणअ अवदासिअं। अदो अहं सिद्धं जइवइ समीअं गच्छम्हि।

(छाया) ['सह सखीभिः सत्वरमस्मत्प्रमदावने प्रविश्यानलसा यतीश्वरपादसेवां कुरु।' एवमेवास्मज्जननीताताभ्यां कृष्णेन चोपदर्शितम्। अतोऽहं शीघ्रं यतिपतिसमीपं गच्छामि।]

(इति नाट्येन यतिपतिसमीपं गच्छति)

(ततः प्रविश्य यतिपतिः)

यतिः—(पुरोऽवलोक्य) अहो, सफलो मे तर्कः। यदुदीरितं रामकृष्णाभ्याम्, तत्तथैव स्मरति, तेजः कामान्धकारनिवर्त्तकम्।

आश्चर्यं क्वचिदप्यपङ्कजमिदं तत्र द्वयं चोत्पलं
चाम्पेयी कलिका जपा च जलजं चक्रौ नभःपङ्कजम्।
शुण्डा चक्रयुगी गदाकिसलयौ तस्यास्तदूर्ध्वं तमः
सूर्याचन्द्रमसौ तडिद्गणयुतं भात्येतदस्मिन्स्थले ॥५॥

श्रीकृष्णं सततं स्मरामि तमहं यस्यानुजायामहो
चक्रौ चन्द्रधृतिं शशी घन[1]धृतिं श्रौत्रं[2] सवर्णो धृतिम्।
पद्मौ तारततिञ्च[3] तानवसुधापर्यन्तसौदामिनी
कुर्वाते कुरुते करोति कुरुतः कुर्वन्त्यलङ्कुर्वते ॥६॥

(इत्युपदिष्ट एवावदत्)

(नेपथ्ये)

उत्थाय शीघ्रमुरुवेगमुदूढकान्ति-
रालिङ्ग्य गाढमतितुङ्गकुचं तदङ्गम्।
बाहुद्वयेन परिघाकृतिना सकाशो
निर्विश्य तामिदमवोवददायताक्षीम् ॥७॥

यतिः (अर्जुनः)—

धन्योऽस्मि सुन्दरि तवाधरशीधुपाना-
दङ्गस्मदोयमभवत्परिशुद्धमन्तः।
कुञ्जे मनोहरतरेऽत्र सुपूजयामि
त्वां देवतामभिमतां कुसुमैरनर्घैः ॥८॥

---

१. ०धन०; २. सोऽयं; ३. ०ततिश्च।

( इति वदन् गान्धर्वेण धर्मेण तां हस्ते गृहीत्वा, तत्र पुष्पपल्लव-कल्पिततल्पे उपविश्य परितोऽवलोक्य )—

इदानीं सर्वोऽपि सुखकरोऽस्ति । पश्य—

आरामस्सुखमातनोति नलिनीवातोऽनुयातस्सुखं
चान्द्रैस्सान्द्रतरैर्मरीचिनिकरैश्शैत्योपचारैः परैः ।
कामास्त्रैरपि दीपकैरनुपमैर्यूनामहं ग्रामणो
राजेयं तनुसङ्गमेन महता कृष्णप्रसादेन च ॥९॥

**सुभद्रा**—( सहर्षम् ) अय्यउत्त मवि[1] एइहि कामवसद्मलआणिलचंदाद-ओवि सुहयरा जादा तुह परिसंगादो । किं आमहतादप्पमुहेहि एव्वं अणुग्गहीदंम्हि ।

( छाया ) [ आर्यपुत्र, ममापि इदानीं कामं वसन्तमलयानिलचन्द्रा-दयोऽपि सुखकरा जाता तव[2] परिष्वङ्गात् । किञ्च, मम तातप्रमुखैरेवमनु-गृहीताऽस्मि —]

'अयि सुभद्रे, मङ्गलस्नानपूर्वमनर्घदुकूलवेष्टिताप्यखिलाभरणैरलङ्कृ-ताऽस्मत्प्रमदावनं झटिति प्रविश्य, सखीसहिता तत्र स्थितस्य योगिनः शुश्रूषां कुरु । तव मनोरथः पूर्णो भविष्यति । सखीजनोऽन्यत्र तिष्ठतु । त्वमेकाकिनी यतिवरमुपरञ्जयोपचारैः ।' तथैव ते सर्वं करोमि ।

( इति वदती तिष्ठति )

**यतिः**—( साश्चर्यमोदम् ) भद्रे, अर्जुन एवाहम्, न यतिः । कृष्णकृतोऽय-मुपायः । दुर्योधनातिविरोधिनिरसनाय इदं रहस्यं गोपनीयम् । आववोर्पाणिग्रहणमङ्गलं कृष्ण एव प्रसिद्धं कारयिष्यति । एतत्सर्वं सखीमुखे रहसि तवापि ताताभ्यां ज्ञापय ।

**( इति तामङ्के निधायालिङ्ग्य तिष्ठति )**

**सुभद्रा**—**( सामोदविस्मयम् )** अय्यउत्त,[3] तुए जआणि वेदिअं, त हव्व किदम् ।

**( छाया )** [ आर्यपुत्र, त्वया यथा निवेदितं, तथैव कृतम् । ]

**सख्यः**—**( सविनयहर्षम् )** देवि, एतं तुह जणणीजणओ सुणिअअदि[4] सयुट्ठ-

---

१. महवि०; २. ०ताव; ३. ०अत; ४. दुट्ठ० ।

हिअमाजादा पाणिग्गअहणसमए आअमिस्संदि। तत्तुए इमिणा सुखं ठादव्वं। अहमेवि जअणिओअग्गच्छम्।

(छाया) [देवि, इयं[1] तव जननीजनकौ श्रुत्वा अतिहृष्टहृदयौ जातौ पाणिग्रहणसमये आगमिष्यतः। तस्मात्त्वयाऽनेन सुखं स्थातव्यम्। वयमपि यथानियोगं गच्छामः।

(इति निष्क्रान्ताः)

**अर्जुनः—(सरोमाञ्चहर्षम्)** अयि सुभद्रे, आवाभ्यामनवरतमप्यनवरतं विहरणीयम्। तत्सर्वमनुकूलं भविष्यति।

(इति तावत्तिष्ठताम्)

(ततः प्रविशति हरिदासः)

**हरिदासः—(सनिःश्वासम्)** सर्वमप्यन्योऽन्यं विरुद्धं कुर्वते दैवम्। पश्य—

कामो हन्ति यतीश्वरानपि भृशं स्त्रीणां मनो दुर्गमं
सद्वृत्तैरपि दुर्दशासमदृशां भेदो जने जायते।
अन्योऽन्यं विबुधेषु बुद्धिरसती श्यामा युवानौ समौ
बाध्येते मदनाशुगैरिति च यत्तन्मे मनः कृन्तति ॥१०॥

**(विमृश्य)**—सज्जनसङ्गतिरेव श्रेयसी सकलजनानामसज्जनसङ्गतिरवमानहेतुः, असज्जनानां सद्दूषणमेव भूषणम्। पश्य—

शूरो निर्घृण ऊह्यते मृदुवचा दीनोऽयमित्यूह्यते
मौनी मूक इतीर्यते बहुवचा वाचाटतां नीयते।
त्यागी दाम्भिक दूष्यते कृतमतिः भ्रान्तत्वमारोप्यते
कर्मी भ्रामक ऊह्यते कुमतिभिः को वा जनः श्लाघ्यते ॥११॥

(विचिन्त्य, सनिर्वेदहर्षम्)

एवमेव सेवकानां वृत्तिः[2] विधिविहितैव नियोज्या, बहुमानो वा, तदन्यो वा, सहनीय एव।

कुतोऽहं द्वारकाभद्रा कुतस्सा हस्तिनापुरी।
कदा विजयवृत्तान्तं ज्ञात्वा राज्ञे वदाम्यहो ॥१२॥

---

१. इदं; २. यामो; ३. वृद्धिः।

कथमद्यापि नायाति ओदनपात्रपाणिर्मतिप्रिया कादम्बरी ।

यस्या दर्शनमात्रेण सर्वक्लेशविनिर्गमः ।
पुंसां तथा सुन्दरीणामन्वयोऽयं विधेः कृतः ॥१३॥

पश्य—

सौन्दर्यसारगुणवत्तरुणीजनाना-
मानङ्गमङ्गमभवद्धुराद्यमेतत् ।
अत्यन्तबालककरान्तरमेयमध्य-
मालोलदृष्टिविशिखं सुखमातनोति ॥१४॥

कथमेतादृशजराविशिष्टस्यापि शिष्टस्य यौवनसङ्गमव्यापारो घटते । तथा हि—

आपादचूडमतिनिष्ठुरकीटकोटि-
दष्टं व्रणै[1]र्मम किणैरभवज्जुगुप्स्यम् ।
दुर्गन्धयुक्तबहुशोणितलिप्तगन्धं
हाऽहं तथापि विषयान्न परित्यजामि ॥१५॥

दिष्टचा स्मृतोऽयं श्लोकः । यथा—

दन्ताश्चञ्चलदन्ताः केशा काशप्रसूनसङ्काशाः ।
नयने तमसामयने तथापि चित्तं घनाङ्गनायत्तम् ॥१६॥

( सस्मरणम् )—

यावन्मायाविशिष्टे जगति विहरते जन्तुरत्यन्तकष्टे
यो वा को वा श्रमी वा वपुषि रतिकरे मूत्ररेतःप्रपूरे ।
नानाचित्रान्नभक्ष्यैर्नवयुवतिरतैर्मेदुरे कामवर्ति-
स्तावत्तिष्ठेत् सत्यं तनुविगमविधिस्सर्वशास्त्रैरधीतः ॥१७॥

( इति वदन्, पुरतोऽवलोक्य सधैर्यम् )

अहो, दैवादाश्वसितस्तावदन्तरात्मा, यतः सर्वं सहैव कादम्बरी मया लीलाकलत्रीकृता सत्वरा इत्वरावाहितजलौदनभाजना समायाति । अतो मे दीर्घमायुः । अस्तु, यद्दर्शनेन जीवेम शरदश्शतम् ।

( इति क्वचित्तटाकरोधोल्लसत्[2] सपल्लवबहुच्छायाफलसहकारतरुमूले तिष्ठति ) ।

---

१. वृणै०; २. पल्व० ।

( ततः प्रविशति कादम्बरी )

**वसुन्धरा (कादम्बरी)**—( विचिन्त्य ) कथमहं कमलाविलासकल्याणभूधरं स्वामिनं द्वारकानायकं दृष्ट्वा विदुरसञ्जयोपदिष्टं रहस्यं वक्ष्यामि ?

( इति वदन्ती, परिक्रम्य, पदान्तरं गत्वा, पुरोऽवलोक्य )—अहो, सहकारमूले श्रान्ताकारो ममोपकान्त इव दृश्यते । तं जलौदनादिभिरश्रान्तं करोमि ।

( इति सहकारमूलमुपाश्रित्य )—आर्योत्तिष्ठ, जलौदनं पीत्वा, विश्रान्तः सन् अश्रान्तवचनव्यापारः कर्त्तव्यः ।

( इति तं प्रबोधयति )

**हरिदासः**—( सपदि समुत्थाय, सप्रमोदं तामालिङ्ग्य )—प्रिये जीवातुरेषा भवती भवति ।

( इति वदित्वा नियमानुष्ठानपूर्वं तदाहृतजलौदनं यथातृप्ति अभ्यवहृत्य, तामपि तेनैव विश्रान्तां विधाय ताम्बूलचर्वणां कुर्वन् दृढचित्तो जलौदनवर्णनमारभते )—

जलौदनमिदं महज्जगति दुर्लभं योगिनां
जलार्द्रलिकुचैर्युतं सह च स्वादुभिश्चूतकैः ।
निवेशितमुदारधीः रजतकांस्यपात्रे प्रधौ
निशान्तसमये पिबेत्सलवणं रसज्ञो जनः ॥१८॥

दन्तानामपि धावनं विरचयन्गण्डूषपूर्वं मुखं
प्रक्षाल्य प्रमदाकरार्पितजलैर्धृत्वोर्ध्वपुण्ड्रं मुखम् ।
[1]नोरान्नं [2]पकुचादिभिः परिकरैर्युक्तं प्रधौ भाजने
भुङ्क्ते[3] यस्सह बालकैर्प्रमदया स ब्रह्मविद्बन्धुभिः ॥१९॥

अथं तैलविमिश्रितं दधियुतं शिष्टं तदन्नं शुभं
किञ्चिच्छेषितमस्ति चेज्जलयुतं पत्नीभिराराधितम् ।
नानासेचनरम्यमब्जसुहृदो बिम्बोदयं गच्छति
श्रीमानन्नत्ति पुमान् स एव सकलं जानाति सारं पुरम् ॥२०॥

निम्बनारङ्गलिकुचकालशाकजलार्द्रकैः ।
लावण्ययुक्तैर्नीरान्नमगतोऽत्ति स यो भवेत् ॥२१॥

---

१. नि०; २. लि०; ३. भुक्ते ।

स हि पुरुषवरस्तिणितणी शृङ्गिवैरः[1] ।
पुनरपि दहने वा तापितैर्नक्तमेतैः ॥२२॥

शीतलान्नोदकेनाहं तथा तृप्तो वसुन्धरे ।
यथा चामृतपानेन पुलोमतनयापतिः ॥२३॥

अन्यं दैवं विना कृष्णं न जानीमः परञ्जपः ।
लघूपायदमस्माकं चरमश्लोककीर्तनात् ॥२४॥

संसारहिंसारहिताः कंसारिपदमाश्रिताः ।
यद्वक्त्राम्बुजसञ्जातश्रुतापानहतैनसः ॥२५॥

निजसुन्दर्यां रतिं दृढं वितन्वन्
अयमिह तद्विरतिं करोति चित्रम् ।
प्रथमचरमयोर्व्यतिक्रमोऽयं
विधिकृतमेतदिदं कथं महद्भिः ॥२६॥

**वसुन्धरा (कादम्बरी[2])**—( सवितर्कम् ) नाथ, अस्य भावो वक्तव्यः ।

**हरिदासः**—( सस्मितम् ) किं रहस्यम् ? अर्जुन एव दृष्टान्तः । स्पष्टोऽर्थः । अहो, सर्वजनसम्भावनीयाकृतिः [3]कामिनीनिध्यानिभोगमुकुलीकृताक्षो बद्धाञ्जलिर्विजयो विजयते ।

**यतिः (अर्जुनः)**—( स्वगतम् ) वसुन्धराजानेऽहमेतदर्थमेव यत्नः कृतः । विदुरसञ्जयादिभिरेतदर्थमेवावां प्रेषितौ हस्तिनापुराद् द्वारकां प्रति । दुर्योधनादियुद्धसन्नाहोऽपि दृष्टः । सुभद्राऽपि यतिनिकटमटति स्त्रीचापल्यात् । अत एव गोपनं पृच्छामि ।

**वसुन्धरा (कादम्बरी)**—पुंसां स्त्रीसङ्ग आवश्यकः किम् ? तदभावे किं कुर्वन्ति ते ? तद्रहस्यं वद वेदितव्यम् ।

**हरिदासः**—किं गोपनीयमस्ति स्त्रीसङ्गमभावे—

**येन केनाप्युपायेन कामी रेतो विसर्जयेत् ।**
**अन्यथा नेत्ररोगस्स्याद् मुष्टिरिष्टैव कामिनी ॥२७॥**

---

१. ०वरैः; २. वसुधा; ३. ०निध्यान ।

चर्मदण्डं कटौ बद्ध्वा धृत्वा हस्तेन तं पुनः ।
अन्योऽन्यं कुरुते सङ्गं नान्यस्मात्पुरुषात् स्त्रियः ॥२८॥

इति वैधातृवचनं ज्ञेयम् ।

**वसुन्धरा (कादम्बरी)**—साधु साधु, शान्तोऽयमातपोद्वेगो मन्दं मन्दम् । आवां प्रकृतकार्यं स्वामिनि निवेदयावः । पूर्वमेव व्यवसायः पत्न्या सह सर्वं स्पष्टं गत्वा द्वारकास्वामिने निवेदयिष्यति ।

( इति निष्क्रान्तौ[1] )

( ततः प्रविशति भावना )

**भावना**—( स्वगतम् )

कदाऽहं द्वारकामेत्य कमलानाथसन्निधिम् ।
प्राप्य किञ्चिद्वदाम्यस्मै रहस्यं सुहृदीरितम् ॥३०॥

( पदान्तरं गत्वा, पुरोऽवलोक्य )—कैषा कमनीयवेषा व्यवसाययोषेव मनीषामुन्मेषयति ।

( ततः प्रविशति विचारणा )

**विचारणा**—( पदान्तरं गत्वा, पुरोऽवलोक्य, स्वगतम् )—

आश्चर्यमागतवती सकलान्तरात्मा
सा भावना जगदशेषविभावना च ।
धर्मस्य कौरवपतेः कृतकर्मणोऽस्य
भागीरथीतनयभाषणभूषणस्य ॥३१॥

वृत्तानि यावदभवोद्भवमुख्यदेव-
योगीन्द्रसन्नुतपदाम्बुजसेवनीका ।
ज्ञास्यामि तत्परतया भुवनेरिताऽहं
नीलाम्बरस्य धृतराष्ट्रसुतस्य सख्यम् ॥३२॥

( इति वदन्ती भावनां प्रणमति )

**भावना**—( सहर्षम् ) वत्से, नयनयोरुत्सवोऽसि यूनाम् । सम्प्राप्ताऽभिमतसिद्धिर्भव ।

---

१. अत्र सावमर्शरूपो विष्कम्भः । लक्षणमस्य—

सम्यं यत्र सकार्यार्थप्रशंसा क्रियते यतः ।
विष्कम्भः सावमर्शोऽपि नाटके कीर्त्यते बुधैः ॥

कृष्णयोरुभयोर्योगं कथमाप्तः सतः कथम् ।
कौन्तेयवासुदेव्योश्च कदा कल्याणनिर्णयः ॥३३॥

सम्प्रति वसुदेवदेवक्योर्नागपर्यङ्कशयनस्थ नन्दनन्दनस्य सेवा कदा जायते, तत्सर्वं वद ।

**विचारणा**—( सचिन्ताभोगं स्वगतम् ) इयं सर्वं जानाति, अथापि राजकुलरहस्यं मन्मुखेनापि श्रोतव्यमित्यध्यवसायोऽस्याः । भवतु पश्यामि । ( प्रकाशम् )—

आर्ये, शब्दार्थशास्त्रनिपुणैर्बहुधा स्तुतासि, सर्वमेतच्च जानासि । अथापि मां वाचयसि । शृणु, वदामि तत्—'तीर्थयात्राव्रतारम्भकसमय एव प्रभासतीर्थे पाराशर्यानुबोधितसुभद्राविवाहार्थं कावेर्यां स्नात्वा, सेत्वादिपुण्यतीर्थेष्ववगाह्य, शतकोटिधनानि विप्रेभ्यो वितीर्य स्वयमक्षौहिणीसेनासहितोद्वारकामेत्यार्जुनः, शैलगुहामध्युवास । अथ कृष्णस्तं यतिवेषेण प्रच्छाद्य बलरामादिभिः सह स्वभवनोद्यानं प्रापय्य स्वभगिनीं तस्य नियोगिनीं विधाय कृतार्थस्तिष्ठति । अयमवसर एव ते द्रष्टुम् । तयोर्पाणिग्रहणमहोत्सवो गान्धर्वेण रहसि जातः । तत्रान्तरेऽयं श्लोकः सर्वैरप्यश्रावि—

आश्चर्यं यमिनां वरोऽहमभवं लब्धो हि योगो महान्
अष्टाङ्गोऽप्यतन्द्रितेन च दिवारात्रं विनिद्रं क्रमात् ।
वेणीबन्धविराजमानविपुलश्रोणीभराक्रान्तिता-
भेणीलोलविलोचनाभविगमं यस्मादनङ्गार्दितः ॥३४॥

प्रशस्ततया विवाहोऽपि सुभद्रार्जुनयोर्जयत एव । तिष्ठतु तत् ।
द्रमिडोपनिषत्सारधारकाणां महात्मनाम् ।
पदयोर्न्यस्तभाराणामस्माकं भगवान्गतिः ॥३५॥

अतस्तत्परिचरणमेवास्माकं युक्तम् । धार्तराष्ट्रकुलोपजापादिकं कथनीयम् । तत् श्रोतुकामोऽस्मि ।

**भावना**—( सुबुद्धिविकासम् ) अयि विचारणे, शृणु । यदा स्वामिनः कृष्णवैशसं बलरामादीनां स्नेहातिशयं दुर्योधनः श्रुत्वा सभायां सर्वान्सिमूहीकृत्य भीष्मं प्रत्यूचे—'अनादिर्नवशान्त्युपायो जनार्दन आबाल्यादपि रन्ध्रान्वेषिणां द्वेषिणां मध्ये प्रथमः । एते पाण्डवास्तस्य बहिश्चराः प्राणाः, एतज्जगद्विख्यातम् । अतोऽस्माकं यथा जयो भवति, तथा क्रियताम्' इति ।

**भीष्मः**—( सहासं विदुरादीनवलोक्य ) अहो विदुर, पूज्या एव हि ते सर्वे। अद्यापि[1] त्वसारज्ञो राज्ञा कथितस्यार्थो मया एवं ज्ञायते। मयि कृष्णकृतो विरोधो ज्ञायत एव युष्मान् हि तापसानुजमपि पक्षीकृत्य, तस्य शुश्रूषार्थं स्वभगिनीं नियुज्य, कृतार्थस्तिष्ठति। स तस्करमस्करी रावण इव सीतां तां गृहीत्वा स्वपुरमेष्यति। तदानीं श्रीकृष्णस्य च मम महद्युद्धं भविष्यति। इदानीमसौकेन पदा निर्गच्छति सभार्यः। तदार्यास्तत्र मम सखायश्चतुरङ्गबलेनोपशस्तास्तिष्ठन्ति। तस्मात्सा यथा मद्वचनाद्भावना सुभद्रां हस्तगता, यथा स्वराजासनं[2] मदधीनं भवेत्तथा कुरु त्वमित्यस्यायमाशयः।

एते पुण्यजना[3] अपूर्वदेवोपमास्तान् भटान् मार्गणेनाध्वस्थान् संस्थितान् विधाय सरोहिताश्वान् स्वरथान्[4] कुर्वन्ति। तद्भार्या विश्वस्ता भवति। तत्र कथमुपाय इति त्वया चिन्त्यः।

**विदुरः**—( सप्रत्यभिज्ञम् )—

अस्मत्पूर्वमुदीरितं वच इदं यद्व्योमपूर्वं जगत्
तत्सर्वं तदधीनमेव न परं चैषा श्रुतिः श्रूयते।
इत्येवं प्रतिपादितं हि भवता व्यासेन संन्यासिना
दत्तात्रेयमनीषिणा च बहुधा सर्वैर्मुनीन्द्रैरपि ॥३६॥

अपि च—

सर्वं निर्मितमेव तेन विभुना केनाप्यसौ निर्जितः
एते दास्यमुपागता विधिमुखा यस्याब्धिकन्यापतेः।
दुष्टान् पेष्टुमिहागतस्तदपरान्संरक्षितुं सात्विकान्
विश्वं त्रातुमपि प्रवृत्तममुना जानन्ति सन्तश्च ये ॥३७॥

**शारद्वतः**—( एवं वदन्तमभिनन्द्य स्वयमपि वृहत्कुमारसनत्कुमारेरितं भगवच्चरितं कथयाम्बभूव )—

क्षीराब्धौ भुजगेन्द्रभोगशयनः श्रीभूमिलीलासखः
त्रातुं दासजनानिहावनितले श्रीदेवकीनन्दनः।
जातः कंसमुखादिहिंसनपरः क्षोणीभुजां दुष्कृतां
सर्वैरागमशेखरैस्समतनोद्धिसां सुखं संस्तुते ॥३८॥

---

१. ०त्रा०; २. राजा; ३. ०जनपूर्वं; ४. स्वस्थान्।

अतः सर्वज्ञस्य सभासदस्ते किमुत्तरं वदामि ।

( इति स मौनमास्ते )

**व्यासः**—( सप्रणामं सर्वानवलोक्य ) भो सर्वे सभास्तारः—

दर्पणालोकनादात्ममुखमीक्ष्य जरत्कपिः ।
जहर्षति यथा राजा स्ववाक्यं मोदते तथा ॥ ३९॥

अतः श्रीकृष्णचरणशरणार्जुनस्य सुभद्राप्राप्तिः, [1]न त्वन्येषामिति शास्त्रार्थसम्मतं मम मतं श्रूयताम्[2] चित्तविभ्रमस्त्यजताञ्च । 'श्रीमन्नारायण एव चिदचिद्विशिष्टाद्वैतं तत्त्वं ज्ञानादिसर्वगुणनिधिः सर्वशब्दवाच्यः सर्ववेद-वेदान्तमृग्यमाणमहिमाभूमासमेतः स्वयं लीलाविभूतौ सर्वं निम्नोन्नतं रचयितुं देवकीजठरपिठरमधिगत्य विश्वात्मादृष्टनिरसनपूर्वं शिष्टधर्मपरि-पालनं कर्तुं श्रीकृष्णरूपेण तिष्ठति । स यत्करोति, तदेव क्षेमलाभ इति मत्वा दृढबुद्धयस्तिष्ठामः । भवितव्यं भवत्येव । सर्वमपि राजन्यकं किमर्थं स्वं स्वं राज्यं विहाय भूकोणे लीनं वर्तते । स्वदेशं गच्छतु । सुभद्रापाणिग्रहण-मङ्गलमर्जुन एव कृत्वा सुखी तिष्ठति । तस्य सर्वस्मात्परश्रीकृष्णावलम्ब-नात् तस्य न कापि क्षतिः । अतः सर्वे वयं गतवन्तस्तथाऽऽगच्छन्तु । पुराऽयं श्रीकृष्णो धृतराष्ट्रगान्धार्यौ, कृपाश्वत्थामानौ, कुन्तीकौन्तेयाः पञ्चद्रौपदी-व्यासश्च सञ्जयविदुरौ विहाय, अष्टादशाक्षौहिणीसेनासमेतान् सर्वान् धार्त-राष्ट्रान् मुरप्रभृतिभिर्दुष्टैस्सह निर्वापयति ।'

सर्वे सन्ति[3] गुणा नित्या जीवो नित्यस्तथाऽप्यणुः ।
परस्मात्स्या विभुश्श्रीमान् सर्वलोकसुरक्षकः ॥४०॥

कृष्णं रुणद्धि को वा कस्य शिक्षाकोटिमाटीकते सः, सर्वस्वतन्त्रत्वा-देवमुक्त्वा, धृतराष्ट्रादीनामन्त्र्य स्नातुं भागीरथीमगात् । सर्वे यथायोग्यं स्वं स्वं गृहमगमन् । गुरुराजवृत्तान्तमेतदुक्तं मया, त्वया श्रुतञ्च ।

इदं सर्वं विचारणामुखात्कृष्णोऽपि जानाति । अत्रत्यवृत्तान्तं, यत्किञ्चिदस्ति चेन्निजकार्यमनुसर । अहमद्यानवद्यं पद्यं कृष्णाय निवेद्य, सुखं गृहं प्रपद्ये ।

( इति तां प्रेषयित्वा, पदान्तरं गत्वा, पुरोऽवलोक्य )

आश्चर्यं मम भाग्येन फलितम् । इत एव प्रमदावने गोपीगोपाल-बालकैरभ्यव्यवहारचिन्तया तिष्ठति । अयमेवावसरः ममापि श्रमं निवार-यितुम् ।

(इति नाट्येन श्रीकृष्णसमीपमुपेत्य, तं प्रणम्योत्थाय, बद्धाञ्जलिस्तिष्ठति)

---

१. नन्व०; २. सद्य; ३. ०ताम् ।

**श्रीकृष्णः**—(सस्मितम्) भावने, मदभिमतमाचरितं भवत्या । परिपन्थिनां सन्नाहोऽपि त्वत्प्रेष्यया विचारणया सर्वं प्रशस्तमुपन्यस्तम् । तत्त्वयाऽऽकर्ण्य तदधिकोऽस्ति चेत्, जोषमुष्यताम् । अन्नपानादिभक्षणेन श्रमं निवारय । तत्सर्वं पश्यामि ।

**भावना**—( सान्तर्हासम् ) अहो, सर्वज्ञता देवस्य । आश्रितवात्सल्यञ्च । किमस्त्यपरम् । सुयोधनपक्षविपक्षा[1]श्शठामार्गकोणेषु तिष्ठन्त्यर्जुनबाधाय । स एकेन बाणेन युधि तान्विजित्य, सभार्यः स्वपुरमेष्यति ।

कान्तो यतिरूपमन्ता कल्पशरेषु कल्पितैस्तपोजातैः ।
पित्रोस्ते सह जायाश्लाघ्यो भर्ता महामहो भूयात् ॥४१॥

रहसि सुभद्रां पार्थः यतिर्यथावदुद्वहेत् ।
प्रभाते भवतु स्पष्टं तथोपायं विचिन्तय[2] ॥४२॥

इदं रहस्यं सञ्जयविदुराभ्यां स्वामिने विज्ञप्तमेतदद्य विज्ञापितं मया । स्वामिनो यथा रोचते, तथा क्रियताम् ।

( इत्युक्त्वा करेण वदनमाच्छाद्य तिष्ठति )

**श्रीकृष्णः**—( सशिरःकम्पम् ) तथैव सर्वमालोचितम्, तदर्थमेवायमारम्भः कृतः । केनाप्युत्सवेन बलरामादीनादाय, राजा बहिरागतः । भगिनी च मे यतिनिकटमटति पटुतरम् । भावने, क्षणविप्रयोगे परस्परं नानाविधावस्थामनुभवतः । पितरौ मात्रं निशान्ते तिष्ठत । अन्यत् सर्वं समीचीनमेव ।

**भावना**—स्वामिन्, त्वदुक्तशेषान्नभोजनेन सर्वश्रमविनिर्गमो जातः, आत्मा कृतार्थश्च । यत्र कुत्रापि कार्ये मां नियोजय यथोक्तकारिणीं, तत्करवाणि ।

**देवः (श्रीकृष्णः)**—( सप्रेमभरम् ) भावने, यथोचितं यत्र कुत्र समीपे वस, समये क्वचित्कार्यमाज्ञापयामि । गच्छेत्यब्रवीत् ।

( सा भावना देवं प्रणम्य, तथेत्युक्त्वा निष्क्रान्ता[3] )

---

१. ०क्ष०; २. ०चिन्त्यः; ३. इदमलङ्कास्यम्—
अङ्कास्यं नाम वृत्तान्तं यद्यदत्र प्रसूच्यते ।
प्रबन्धीयं मध्यपात्रैस्तदङ्कास्यमुदीरितम् ॥४३॥
इति लक्षणात् ।

**श्रीकृष्णः**—भो गोपाः, भवन्तोऽपि भूपा इव बहुप्रकारेण करनिकरेण मामानन्दयन्ति। चिरविरहेणासां मम शरीरं कृशमपि एतदुपाहृतभोज्यलेह्यचोष्यान्नादिभक्षणेनानन्दतुन्दिलं जातम्, एवमेतैर्भवत्कृत्यैरतितृप्तं मनश्च। 'यदन्नः पुरुषो भवति, तदन्नास्तस्य देवताः' इति वेदवादोऽपि स्पष्टीकृतः। गार्ग्योऽपि मया सेवितः। तेनाचार्यं भगवन्तमुपाध्यायं मार्गस्थं तटस्थमुपचरेत्, तमनतिक्रम्य तिष्ठेदित्यादिधर्मशास्त्रवादोऽपि सफलीकृतः। पितरौ च दृष्टौ यशोदानन्दनौ। ताभ्यामुपलालितश्चाहम्। इतः परं द्वारकां गत्वा, तत्र स्थितौ देवकीवसुदेवौ बलरामं च दृष्ट्वा, कुशलं पृष्ट्वा, तैः सुपूजितः, 'साधु वृन्दावनं, साधु वृन्दावनं, प्रविश्य सुखं रमध्वमिति'।

( सर्वानादिदेश श्रीकृष्णः। ते सर्वेऽपि यथायोग्यं नन्दादयो निश्चक्रुः। )

अथ श्रीकृष्णोऽपि तान्बहुप्रयत्नैस्समाधाय स्वपुरं प्रति प्रेषयित्वा नारदं सस्मार।

अथ स्मृतमात्र एव देवर्षिराजगाम समीपं श्रीकृष्णस्य, भगवानपि गोविन्दस्तं प्रत्युत्थानप्रणतिभिरुपचर्य सुभद्राकल्याणवृत्तान्तमकथयत्।

सोऽपि इङ्गितज्ञस्तेन तथा वन्दितस्तमामन्त्र्य, महेन्द्रसदनं गत्वा तेन यथावत्पूजितः तदर्द्धासने स्थित्वा, रहसि गत्वा श्रीकृष्णकथितं रहस्यमबोधयत्—

'अस्मिन्दिने रात्रावेव सपरिवारेण त्वया द्वारकायां भगवद्भवनोद्याने ब्रह्मादिभिस्सुरगणैस्सह आगन्तव्यम्। तत्र अर्जुनस्य सुभद्रया सह वैवाहिकं मङ्गलं कारयित्वा पुनस्तदानीमेव स्वस्थानं गन्तव्यं बहुमानितैः युष्माभिः'। इति।

इन्द्रोऽपि 'तथैव तत्करोमि' इति नारदं प्रेषयित्वा, स्वयं श्रीकृष्णवाक्यं सार्थकं कर्तुं यत्नमतनोत्।

**( अथ कृष्णेन साकं समुद्रतीरगमनं नाटयन्तौ निष्क्रान्तास्सर्वे )**

**।। इति श्रीवेङ्कटवरदाचार्यविरचिते श्रीकृष्णविजयाभिधाने डिमे 'तृतीया यवनिका' सम्पूर्णा ।।**

## अथ चतुर्थी यवनिका

( ततः प्रविशति विचक्षणा )

**विचक्षणा**—अइ विआरणे, कुदो चिराएसि। कमलाविलाससोहसिहरविहरमाणं सामिणं पेक्खिअज्झन्ति आअत्थोति कहिदवच्चासी अम्हणि अन्तिभावणा।

( छाया )—[ अयि विचारणे, कुतः चिरायसि। कमलाविलाससौधशिखरविहरमाणं स्वामिनं प्रेक्ष्य 'झटित्यागच्छ' इति कथितवत्यासीदस्मन्नियन्त्रिणी भावना। ]

( ततः प्रविशति[1] विचारणा )

**विचारणा**—[2]हिम्माणहेतुम्म एदावपज्जत्तं कुदो केण विभुअंगेणणणीदं[3] कुर्णदिदाणीं पबुन्धा सावसेसकसाइदण अणणमग्गं विहाअ ऊण कुदो गच्छसि। मह अहिमुहं एहि।

( छाया )—[ आश्चर्यं सखि, एतावत्पर्यन्तं त्वं कुतः केनापि भुजङ्गेन निद्रां कुर्वंती इदानीं प्रबुद्धा स्वापशेषकषायितनयना मार्गं विहाय कुतो गच्छसि। ममाभिमुखमेहि। ]

**विचक्षणा**—अइदाणीं एव्व इंदाइणो सुपव्वाणो सुराआरिअमुहेहिं जोईसरे आणइदुंदुहि देवई किसणं पमुहेहिं जहस्सधं सुभद्दापन्धाणं वैवाहिअं कमणिव्वच्च अच्चंदचउराहि पुलोमआपमुहाहिं देव्वगणोहि अलङ्किदाणं वहूवराणां मंगलनीरायणं विकदुअसव्वेविगन्धपुप्कवसणाभरणद्दविणाम्बू अणराक्खसीहिं सम्भाविदा। देवईं वसुदेवा अपि किसणेण आपहिआझंदे पुरं पविट्ठा चिट्ठदि। देवगणोवि जहणिद्रे संसामिणो गदु अजहरुठ्ठाणम्।

( छाया )—[ अयि, इदानीमेवेन्द्रादयो सुपर्वाणः सुराचार्यप्रमुखैर्योगीश्वरैरानकदुन्दभिदेवकीकृष्णप्रमुखैर्यथाशास्त्रं सुभद्रापार्थयोर्वैवाहिकं कर्म निर्वर्त्य, अत्यन्तचतुराभिः पुलोमजाप्रमुखाभिर्देवाङ्गनाभिरलङ्कृ-

---

१. प्रविश्य; २. हिमा०; ३. ०णणी०।

तयोर्वधूवरयोर्मङ्गलनीराजनमपि कृत्वा सर्वेऽपि गन्धपुष्पवसनाभरणद्रविण-ताम्बूलराशिभिः सम्भाविताः। देवकीवसुदेवावपि श्रीकृष्णेनाराधितावन्तः-पुरं प्रविष्टौ तिष्ठतः। देवगणोऽपि यथानिर्देशं स्वामिनः कृत्वा यथास्थानं प्रविष्टाः। ]

वहूवरा उहे अ स्वोत्थिपसथ्थं उवइदत्ताओ अददारवताओ सीसंधा-रिणीओ सुहं पसिद्धं सङ्गामिअ केलिसअणे पुप्फसअणे जहसुह विअरं दिदाणीं तु शीग्घं देवईं सयणघरं पविसियताए वसुदेवस्स अ गादसवहणाविञ करेहि। अहं वि उन्जाणं गदुअताणं वहूवराणं कप्पूलचन्दणादि अदेऊण अपरिकज्जं पेक्खिस्समातुह जह रुच्चइ तह करणेइ जइद्धणामासि।

(छाया)—[ वधूवरावुभे च स्वस्तिप्रशस्तं द्विजैर्दत्तानार्द्राक्षता-ञ्शिरसा धृत्वा सुखं प्रसिद्धं सङ्गम्य केलिसदने पुष्पशयने यथासुखं विहारं चक्रतुः। इदानीं त्वं शीघ्रं देवकीशयनगृहं प्रविश्य, तस्या वसुदेवस्य च पादसंवाहनादिकं कुरु। अहमपि उद्यानं गत्वा तयोर्वधूवरयोर्कर्पूरचन्द-नादिकं दत्वा, उपरिकार्यं प्रेक्ष्ये। तुभ्यं यथा रोचते, तथा कुरु। यथार्थनामाऽसि।

**विचारणा**—( स्वगतम् ) लणपमदुज्जाणे सुभद्दासुहं चिट्ठदि सुइ कोमलादि-महुरद्धाणविआबालिआदं हुक्कं खइ सुअलो अणअरिदेणेव्व-परंक्खिआ।

(छाया)—[ ननु प्रमदोद्याने सुभद्रा तिष्ठति श्रुतिकोमलादि-मधुरध्वानप्रिया बालिकां द्रष्टुं काङ्क्षति। सुलोचना आलिन्द एव संरक्षिताऽस्ति। ]

इदो वरं किं करणीज्जंए। णिद्दाए विप्पलद्धाम्हि। पहादे इद्दप्पद्धे वावहूवराणेच्छम्हि।

(छाया) [ इतः परं किं करणीयं मया। निद्रया विप्रलब्धाऽस्मि। प्रभाते इन्द्रप्रस्थे वा वधूवरौ पश्यामि।

(**प्रकाशम्**)—[ अइ अणिद्दावुण्णमाणणअणाअजाजहं मालिआभू-संवरंदहाणाउवरि केलिजोग्गंमिआएमि। सुहाव एव्व तुए कहिदो। कामेण मोहिदा केण विधुत्तेण निद्दअं भट्ठिआपरवसाणिद्दंगअंमि। होदु मज्जह-भवणं विहरेहिं। अहं वि तुंमणि देसपआएण कज्जं करेमि।

(छाया)—[ अतिनिर्दयनिद्राघूर्णमाननयना यथायथं मालिका-भूषाम्बरं दधाना उपरि केलियोग्यं मार्गम्मृगयेयम्। स्वभाव एव त्वया

कथितः। कामेन मोहिता केनापि धूर्तेण निर्दयमर्पिता परवशा निद्रां गताऽस्मि। भवतु, त्वं यथाभवनं विहर। अहमपि युष्मन्निर्देशप्रकारेण कार्यं करोमि। ⋯ ⋯ ( इत्युभे परस्परं समाधाय, निजनिजकार्यं तिष्ठतः )। ]

॥ इति प्रवेशकः ॥

( ततः प्रविशति चित्ररथः )

**चित्ररथः**—( सविस्मयम् )—अये राजन् सुमालिन्, दृष्टमेव नन्वर्जुनेन भगवदवलम्बनफलम्। पश्य

कुतो यातास्सर्वे कुरुनृपतिपुत्रप्रभृतयो
निरानन्दा मन्दाः प्रविविशुरमन्दं बलिगृहम्।
दितेः पुत्रा मित्रैस्सह विपुलवीर्यैर्निशिचरै-
रकूपारं प्राप्ताः स जयति सुभद्रापतिरथम् ॥१॥

अपि च—

कामं कामसहस्रसुन्दरतरं कौन्तेयमैच्छत्स्वयं
कल्याणी कनकाम्बरस्य सहजा कल्याणकान्त्योज्ज्वला।
कान्तासृष्टिनिदर्शनं शतधृतेः सौन्दर्यरत्नाकरो
देवानां वनिता वदन्ति कमलाविष्णुं यथेति स्फुटम् ॥२॥

अमित्रतिमिरौघानां मित्र एव यदूद्वहः।
मित्रव्यसनदावाग्निः निर्वापणवलाहकः ॥३॥

( एवं वदन् सर्वतः पश्यति )

वेदोऽखिलो धर्ममूलं धर्मो विष्णुस्सनातनः।

**सुमाली** ( साभ्युपगमम् )—

यन्मायाजनिताः सर्वे ब्रह्मेशानपुरोगमाः ॥४॥

**चित्ररथः**—( सशिरःकम्पम् )—सुमालिन्, युक्तमेवोक्तं भवता। असौ प्रभुशक्तिरन्यादृशी। पश्य—

केनापि धर्मव्याजेन सर्वान्नीत्वोदधेस्तटम्।
अञ्जसा सञ्जयामास रहस्येव वधूवरौ ॥५॥

अत एवोक्तं विबुधैः—

तेजो बलं जन्मवतां राज्ञां शक्तित्रयं बलम्।
क्षुद्बलं सर्वजन्तूनां सर्वेषां काञ्चनं बलम् ॥६॥

इतः परं अस्माकं किं कार्यम् ? यथेच्छं गच्छामः ।

( इति निष्क्रान्तौ )

इति चूलिका । ( चूलिका नाम कथिता सिद्धकार्योपपादिका । )

( ततः प्रविशतो वैतालिकौ )

**वैतालिकौ—**

जय जय यदुवंशमौक्तिकमणे, उत्तिष्ठोत्तिष्ठ । प्रभातसमयस्संवृत्तः । आह्निकसमय अतिक्रमते । पश्य—

स्नात्येषा द्विजराजिरत्र जननीं वेदस्य जप्त्वा परं
सन्ध्यावन्दनमारचय्य विधिवत्कृत्वाऽग्निसेवां परे ।
वेदानां पठनं विधाय च पितॄन् सन्तर्प्य देवर्षिभि-
र्देवोत्तिष्ठ जगन्निवास भगवन् सूर्यस्समुत्तिष्ठते ॥८॥

समुत्तिष्ठन्ति यादवाः प्रबुद्धाः । ( श्रवणमभिनीय ) हे हलिन्, सूर्योदयो जातः ।

किं निद्रासि भक्तजनमानसमानसः सारससारसः कंसारिः ।
तमेनं शीघ्रमुद्बोधय यस्य चरित्रमतिविचित्रम् ॥९॥

अत्र वसन् सः सुत्रामसूनोः सुभद्रायाश्चान्योऽन्यमेलनमेकमुखद्विमुखत्रिमुखचतुर्मुखपञ्चमुखषण्मुखसप्तमुखप्रमुखबर्हिर्मुखैः सप्तर्षिभिर्यथाशास्त्रं देवकीवसुदेवाभ्यां कारयित्वा, भवनोद्यानमध्यवर्त्तिकनकनवरत्नदशशतस्तम्भमण्डपमध्याजिरराजमाणमणिसिंहासनसमारूढौ च रचयित्वा, सर्वलोकलोकान् तत्र मेलयित्वा, स्वयं किमप्यजानन्निवास्वपन् मध्ये स्वपिति । अत्र बृहस्पतिप्रभृतयोऽयमाशीर्वादसमय इति त्वरयन्ति, कृष्णं मृगयन्ते च ।

( अथ बृहस्पतिप्रेषिता धारणा सर्वास्सुमङ्गलीर्वायनग्रहणार्थं गृहीत्वा इदानीमेवान्तःपुरं प्रविवेश । )

**धारणा—**

पुरं विहाय रात्रौ तीर्थतीरवास एवास्माकं तपःफलं जातम् । यतेस्तपःफलन्तु कन्यारत्नत्वेन परिणतम् । दुर्योधनप्रभृतीनामधिरूपेण परिणतं फलम् । मध्यवर्तिनां वसनाभरणभोजनद्रविणरूपेण फलमुत्पन्नम् । सुभद्रापाणिग्रहणविधित्सूनां राज्ञां स्वपुरनिबर्तनमेव फलम् । पूर्वमेव पुरन्दरेण तापसपवननासत्यापत्यगाङ्गेयविदुरकुम्भभूततद्भवशारद्वदादयः स्नेहबन्धवो बान्धवाश्च राजानः

समानीताः। श्रीकृष्णस्ततो गाङ्गेयपुलिन्दालिन्दानभिनन्द्य सुप्रतीक इव सुप्रतीकस्तुङ्गतूलासनादुत्थाय भ्रातरं प्रणम्य गुरो, किमेतदद्भुतं यादवकथितम्। यथा—

मयशम्बरमारीचविद्युज्जिह्वेन्द्रजित्क्रमः।
नोपास्योऽयं यतिरिति पूर्वमेव मयोदितः ॥१०॥

त्वया सम्पादितोऽनर्थः किं कर्तव्यमितः परम्।
एकः पापानि कुरुते फलं भुङ्क्तेऽपरो[१] जनः ॥११॥

इति न्यायेन सर्पवृश्चिकरक्षणन्यायेन च त्वत्कृतोऽयं दोषस्त्वत्सम्बन्धिनोऽपि पर्येति।

(इति वदन् तूष्णीमुवास)

**बलरामः**—(विहस्य) विश्वकुक्षिम्भर, त्वत्कृतं संविधानं न जानासि किम्? तव मायां को न जानाति? अस्तु नाम। उत्तिष्ठ, सर्वे तत्रैव गच्छामः।

(इति कृष्णं हस्ते गृहीत्वा, सिन्धुतीरात्पुरप्रवेशं नाटयन् सपरिवारं सभां प्रविवेश। सर्वेऽपि तथा कुर्वन्ति।)

**॥ इति श्रीवेङ्कटवरदाचार्यविरचिते श्रीकृष्णविजयाभिधाने डिमे 'चतुर्थी यवनिका' सम्पूर्णा ॥**



## अथ पञ्चमी यवनिका

वृत्तानुवादो सिद्धान्तः डिमस्याहुर्मनीषिणः ।
... ... ... ... ... ... ... ।।१।।
... ... ... ... .. ... ।
मुदेऽस्तु सततं महत्यखिललोकसम्मोदिनी ।।२।।

( अथ प्रविशति ब्रह्मदृशा संज्ञापितो बृहस्पतिः )

**बृहस्पतिः**—( बद्धाञ्जलिः पूर्वाभिमुख इन्द्रेन्द्रानुजाज्ञया सर्वानवलोक्य )–

यावत्तिष्ठति मेदिनी फणिपतेर्मूर्धानमेत्य स्थिरा
ज्योतिश्चक्रमिदं सुमेरुमभितो यावच्चलत्युज्ज्वलम् ।
यावत्क्रीडति सर्वलोकजननी श्रीविष्णुवक्षस्स्थले
तावत्स्यादयमेव पार्थविजयी राजा जगद्रञ्जयन् ।।३।।

अथार्जुनः सभार्यः सर्वान् प्रणम्य, शरणागतसंरक्षणकृतक्षणं कमलेक्षणं सपत्नीगणं प्रणम्याभिवाद्य, निरवद्यपद्यमेवमवदत्—

**अर्जुनः**—

वात्सल्येन महावराहवपुषा भक्तेषु मग्नां भुवं
दंष्ट्राग्रेण समुद्धरन् जलनिधेस्त्वं राजसे क्ष्मापतिः ।
तादृक्त्रातुमिमां भवन्यदुकुले, सोऽस्मांश्च संरक्षसे
तत्तत्प्रार्थितवस्तुदो नमस्ते भवते सुभद्राग्रज ।।४।।

**सभासदः**—

यथैव गुरुणा चोक्तं तथैवास्तु वदन् बुधाः ।
मन्त्राक्षतैर्समानर्चुरर्जुनं सह भार्यया ।।५।।

**अर्जुनः**—( अर्घ्यादिद्वात्रिंशदुपचारैस्ससपत्नीगणं कमलेक्षणं सम्पूज्य तथा बलरामं श्वसुरौ च स्वबन्धून् ब्रह्मादिदेवान् कृतमुखान् मुखोद्भवान्सर्वानिन्द्राणीप्रमुखसुवासिनीश्च गन्धपुष्पताम्बूलपटवासपटाभरणद्रविणरत्नौघैर्भगवत्कटाक्षलब्धैस्सम्मान्य, भगवच्चरणकमलपरिचरणस्समतिष्ठत् । )

( नेपथ्ये )

ब्रह्मप्रयत्नैर्बहुभिरमात्यैः
बलेन कृष्णेन च यादवैश्च ।
रत्नैरनेकैरपि पूजितोऽसौ
शर्माणि लेभे सहसा किरीटी ॥६॥

विसिस्मिरे तत्र जनास्समस्ता-
श्चित्रं चरित्रं परिवीक्ष्य विष्णोः ।
ब्रह्मादयो देवगणा मुनीन्द्रा
मनुष्यभावस्य मनुष्यवर्गैः ॥७॥

अथामरेन्द्रा विधिरुद्रपूर्वाः
प्रणम्य कृष्णं कमलायताक्षम् ।
तं कामपालं वसुदेवमेन-
मामन्त्र्य बद्धाञ्जलयः प्रतस्थुः ॥८॥

स्वं स्वं प्रदेशं प्रति भूमिपालाः
सुधन्वपूर्वाश्च महाबलाश्च ते ।
ययुः समामन्त्र्य यदुप्रवीरं
श्रीकृष्णमेनं शिरसा प्रणम्य ॥९॥

अथार्जुनस्साग्निपुरोहिताग्रजैः
सहोदरैस्सर्वदृशा च जित्वरैः ।
विसृत्वरैरश्ववरैरनीकैः
रथाधिरूढः प्रययौ निजां पुरीम् ॥१०॥

किरीटकेयूरकनत्कुण्डलः
प्रलम्बपीताम्बरहारभूषितः ।
सहोदरीं स्वां यतिने समर्पयन्
सहर्षमित्थं तमुवाच कृष्णः ॥११॥

**श्रीकृष्णः—**

युक्तं त्वयोपलब्धा मम सोदरीयं
कार्येषु भारभृवसौ सुहृदस्मि ते च ।
त्वं चापि मे सहचरस्सह भार्यया या
मत्स्योदरी मदनशक्तिरिवाविरासीत् ॥१२॥

अतोऽहमन्तःपुरमेत्य, पित्रादिभिः किञ्चिद्रहस्यमुक्त्वा, तत्र स्थितां सुभद्रां तव निकटे प्रेषयामि । त्वमपि शीघ्रमेव प्रमदावनमध्यवर्तिमहामणि-सौधमारुह्य निवसन् तया सह मानुषान् भोगाननुभवन् मदनुज्ञातः श्वः प्रभाते स्वां पुरीं ससैन्यो गमिष्यसि ।

( ततः प्रविशति सपरिजनोऽर्जुनः )

अर्जुनः—( सविनयम् ) हे माधव, वयमत्रैव सर्वैश्वर्याननुभवन् तिष्ठामः ।

( इति निष्क्रान्तास्सर्वे )

॥ इति श्रीवेङ्कटवरदाचार्यविरचिते श्रीकृष्णविजया-भिधाने डिमे 'पञ्चमी यवनिका' सम्पूर्णा ॥



## अथ षष्ठी यवनिका

( ततः प्रविशति सपरिजनोऽर्जुनः )

**अर्जुनः**—अये परिजनाः, नाद्यापि समागता प्रियतमा । अयि प्रिये—

सुतनुसुतनुयोगात् शान्तिमभ्येति तापो
मनसि भवभवोऽयं नान्यथा शान्तिमेति ।।१।।

( इत्यर्द्धोक्ते एव )

**परिजनः**—देव, एतावत्कालपर्यन्तमत्रैव स्थितवती सा बाला । क्षणमात्रविरहेणातीव प्रवेपसि। मां प्रत्येवमुक्तवान् पूर्वम् । सैव प्रौढा सौधाग्रमारूढा तवागमनमाकाङ्क्षमाणा तिष्ठति ।

**अर्जुनः**—

परिप्लावाक्षियुगलां पाणिस्पर्शानुमेयवक्षोजाम् ।
ईषद्विवरवराङ्गी तां त्वामङ्गींकरोमि तन्वङ्गीम् ।।२।।
प्रतिभाव्य निबद्धोऽसौ प्रबुद्धकमलेक्षणः ।
क्षणं क्षणं करोति स्म वैवाहिकमिहावयोः ।।३।।

**परिजनः**—( सधैर्यम् )—देव, सा देवी भवन्तमुद्दिश्य सख्या किमपि वदति ( इव ) । शृणु तत्कथनम् ।

( अथार्जुनः श्रवणं नाटयन् क्वचित्कुञ्जे निवसति । )

( अथ प्रविशति सुभद्रा सख्यश्च )

**सख्यः**—

द्राक्षालतामण्डपमध्यवर्ती
सूर्योऽथवा शीतकरः कुमारः ।
वज्रायुधस्यात्मभवो जयन्तः
कान्तो रतेरस्त्यथ किं वसन्तः ।।४।।

अर्जुनः—

सारङ्गराजगमनालकनेत्रवृत्तिः
सारङ्गराजगमना मम भावना च।
सारङ्गराजमनसा तरसारसाक्षी
सारङ्गराजरमणा करुणा विभाति ॥५॥

यतिरस्मि समाधाय योगं प्रापमनुत्तमम्।
वासुदेवेव देवे न भद्रया तत्सुभद्रया ॥६॥

अनिर्वाच्यो हि भगवान्नारायणः हरिस्स्वयम्।
सोदरीमपि भक्तान्स्वानर्पयन्मादृशानपि ॥७॥

तद्गत्वा सह प्रियया तमेव पश्यामि, इति निष्क्रान्तः।

( [1]ततः प्रविशति सिंहासनमारूढः वसुदेवः सह देवक्या मन्त्रयमाणः )

वसुदेवः—

धृतमुक्तातपत्रोऽहमिति श्रीनन्दनन्दनः।
स्वाहितानपि मुक्तातपत्रान् चक्रे किमद्भुतम् ॥८॥

कुलद्वयेऽपि चलिताविव राजहंसौ
द्वौ चामरौ रविभुवोऽवितुश्च विष्णोः।
पार्श्वद्वयेऽपि लसतः परिचारिकाभ्या-
मेवं वदन्ति कवयो हरिनीलमूर्तेः ॥९॥

( देवकीं विलोक्य )—

आश्चर्यम्, आर्ये, मयाऽद्य स्वप्ने दृष्टः स एव भगवानयम्।

पश्य—

क्षीरार्णवाभ्यर्णविवर्त्तिदिव्य-
शेषाङ्गपर्यङ्कनिविष्टदेहः।
श्रीभूमिनीलः परिचर्यमाणो
दृष्टो मया कोऽपि तमालनीलः ॥१०॥

---

१. इति पित्रादिभिः सह सिंहासनारूढस्तिष्ठति।

बालं कृष्णममानुषं जगदिरे नारायणं श्रीधरं
पार्थं तं नरमेव तत्सखमिति यत्स्यात् स बन्धुक्रमम् ।
स्वप्ने मय्युपदिश्य कोऽपि मुनिराट् ब्रह्माणमप्यन्वगाद्
देवास्त्वत्तनयार्पतिं विजयिनं कुर्वन्तु ते मङ्गलम् ॥११॥

अपि च—

यो बाल्ये शकटं हठाद्विकटयन् कीर्त्तिं स्मृतिं प्रापयन्
वात्यं हात्यभिनवबलेन च बलीवर्दं ममर्द क्षणात् ।
चक्रे पाकमिदं च शोकपदमप्यन्वीय कंसं हतं
वत्सं कुत्समभर्त्सयत्कथमहो श्रीवत्सवत्सस्स्वयम् ॥१२॥

( इति वदन् आश्चर्यस्तम्भितकर्णस्तिष्ठति । )

**देवकी**—( सहर्षम् )—अय्यउत्त, तुए कहिदो जहद्दो एव्व । मये वि तहव्व सिवणाओ दिठ्ठो । जदा महजठ्ठरं भिखिरसाअरादो ओदिओ कोचि महोप्पविठ्ठओ । तदा पहुदिवअत्तिसं कोडिदेवगणेहिं कमलसम्भवो मप्पदिक्खिणी करिअ पणमतो सअलोवआरं कुणं चोद्देवगणेहिं परमपुरुसो अच्चिअ पादाचिठ्ठमि । अदो अच्चुद्दग्गाजो तस्स अणुजो दुवे विविसुवचिदचिण्ण अणाहि अआर कप्पय्येव्व इत्ति मण्णत्तहोमि । ताअंमोपरमपुरुसजणणीजणआ जादा पुव्वजम्मतवोबलेण ।

( छाया ) [ आर्यपुत्र, त्वया कथितं यथार्थमेव । मयाऽपि तथैव स्वप्नको दृष्टः । यथा मम जठरे क्षीरसागरादवतीर्णो कश्चिन्महः प्रविष्टः । तदा प्रभृति त्रयस्त्रिंशत्कोटिदेवगणैः कमलसम्भवो मां प्रदक्षिणीकृत्य प्रणमन्, सकलोपचारं कुर्वन् देवाङ्गनाभिः परमपुरुषोऽर्चितपादा तिष्ठामि । अतोऽच्युताग्रजस्तस्यानुजो द्वावपि विश्वचिदचिन्नयनाधिकारकल्पकाविति मन्यमाना भवामि । तस्मादावां परमपुरुषजनितारौ जातौ पूर्वजन्मतपोबलेन । ]

वसुदेवः—प्रिये,

रामोऽयं रेवतीप्रेयान् साक्षाच्छेषो सुतस्तव ।
कृष्णस्तु भगवान् साक्षादवतीर्णो रमापतिः ।।१३।।

तदेहि, गत्वा तत्र सम्पन्नं समीहितं सह सुभद्रया नरमर्जुनं नारायणं तत्सहचरं तावकीनं पुत्रं कृष्णं च पश्याव इति ।

देवकी—तहा ।

( छाया ) [ तथा । ]

( इति निष्क्रान्तौ )

( ततः प्रविशति अर्जुनः सुभद्रया सह विहरमाणः, कृष्णश्च । )

कृष्णः—( मन्दं विहस्य )—भो यते, ननु सम्पन्नं ते समीहितं मम सोदरीलाभेन इति पश्याम्यहम् । तथापि वद, किं ते भूयः प्रियमुपकरोमि ।

अर्जुनः—( साञ्जलिबन्धं सविनयम् )—ननु भवत एव विजयोऽयं माधव, भवानेव विजयतेऽत्र मम सुभद्रालाभेन । हे भक्तवत्सल, करुणानिधान, ममार्तबन्धो ! किन्न कृतं त्वया मदर्थम् । अत्र—

योगिनामप्यगम्यो मे साक्षात्त्वं मे सखा हरिः ।
सोदरी ते च मे जाया किमन्यच्छ्रेयसे मम ।।१४।।

तथापीदमस्तु भरतवाक्यम्—

दाम्पत्यं नितरां निसर्गमधुरं सञ्जायतामीशयो-
रद्वैतं महितं जनेषु सततं प्रीतिस्त्वदङ्घ्र्यब्जयोः ।
दैवीवाचमुपासयन्तु कवयो संयान्तु ते त्वद्गतिं
सो वै वेङ्कटराजतां चरणयोर्भद्रासमेतोऽर्जुनः ॥१५॥

॥ इति श्रीवेङ्कटवरदाचार्यविरचिते श्रीकृष्णविजयाभिधाने डिमे 'षष्ठी यवनिका' सम्पूर्णा ॥

॥ सम्पूर्णोऽयं डिमः ॥

॥ हरिः ॐ ॥



